जिज्ञासा –

# मर्यादायाम् अभिविधौ च आ (आङ्)

शिष्यः - 'आकर्मकरात् आमहाराजम्' इति प्रयोगः दृष्टः। अर्थविषये जिज्ञासा उत्पन्ना। श्रीमन्! 'आ' इत्यस्य कः अर्थः?

आ - 'आकर्मकरात्' इत्यस्य 'कर्मकरम् आरभ्य' (कर्मकरम् अविहाय) इति अर्थः। 'आमहाराजम्' इत्यस्य अपि 'महाराजम् अविहाय' इत्येव अर्थः। एवं च उभयत्रापि 'अभिविधिः'।

'आ'शब्दस्य प्रसिद्धम् अर्थद्वयम्– मर्यादा अभिविधिश्चेति। मर्यादा नाम तेन विना इत्यर्थः। अभिविधिः नाम तेन सह इति। उदाहरणदर्शनेन एतत् स्पष्टं भविष्यति। लौकिकम् उदाहरणद्वयं परिशीलयाम तावत्–

१. आषोडशदिनाङ्कं विरामः।

२. आकार्यसमाप्ति सः निद्रां न कृतवान्।

प्रथमात् वाक्यात् ज्ञायते यत् षोडशे दिनाङ्के नास्ति विरामः इति। षोडशदिनाङ्कः त्यक्तः अत्र। अतः अत्र मर्यादा (तेन विना)। द्वितीये उदाहरणे 'कार्यसमाप्तेरनन्तरं सः निद्रां कृतवान्' इत्यस्य अर्थस्य प्रतीतिः। समाप्तिः अपि अवधौ गण्यते अत्र। अतः अत्र अभिविधिः (तेन सह)।

अभिविध्यर्थकस्य मर्यादार्थकस्य च 'आ'(आङ्) इत्यस्य योगे पञ्चमीविभक्तिः भवति। एतयोः एव अर्थयोः 'आ', पञ्चम्यन्तेन वा समस्यते। तन्नाम– 'आ महाराजात्' इति विग्रहवाक्यम्। 'आमहाराजम्' इति समस्तं पदम्। समासाभावे 'आ' इत्यस्य योगात् महाराजपदस्य पञ्चमी एव।

शि - 'आमहाराजम्' इत्यत्र कः समासः?

आ - 'आ'इत्येतत् अव्ययम्। अतः अत्र अव्ययीभावसमासः*। अतः समस्तपदलेखनसमये अव्ययीभावस्य सर्वे नियमाः स्मर्तव्याः भवन्ति।

शि - श्रीमन्! 'आमहाराजम्' इत्येतत् समस्तं पदम्। 'आ कर्मकरात्' इत्येतत् असमस्तं रूपं वा?

आ - एतत् अथं तर्कितवान् भवान्?

शि - समासाभावे पञ्चमीविभक्तिश्रवणम् इति भवता पूर्वम् उक्तम्। कर्मकरात् इत्यत्र पञ्चमी दृश्यते। अतः असमस्तं रूपम् इति मया तर्कितम्।

आ - युक्तः तर्कः भवतः। असमस्तं रूपं तत्। अतः तत्र 'आ' इति एकं पदम्। कर्मकरात् इति अपरं पदम्। अतः लेखनसमये तयोः पृथक् लेखनं वरम्। (उभयोः पदयोः मध्ये अवकाशः स्यात्) यथा– आ कर्मकरात्। इदानीं भवान् द्वित्राणि उदाहरणानि वदतु तावत्।

शि - १. आ सेतोः आहिमाचलं भारतदेशः।

२. आ बालात् आवृद्धं सर्वे संस्कृते प्रीतिमन्तः।

३. आ प्रातः आसायं सः कार्यं कृतवान्।

आ - तृतीये उदाहरणे 'आसायम्' इत्यत्र मर्यादा (तेन विना) दृश्यते, पश्यतु। इतरत्र सर्वत्र अभिविधिः (तेन सह) एव। अन्यः अंशः भवता स्मर्तव्यः– एतेषु उदाहरणेषु अवधिद्वयं दृश्यते। पूर्वावधिद्योतनसन्दर्भे व्यस्तः प्रयोगः कृतः, त्रिषु उदाहरणेषु अपि। अत्र व्यस्तः एव प्रयोगः कर्तव्यः इति न नियमः। समस्तः प्रयोगः अपि शक्यः एव। यथा– आसेतु, आबालम्, आप्रातः इत्यादि। वाक्यसौन्दर्यार्थं व्यस्तं प्रयोगं कुर्वन्ति केचन।

शि - 'उत्तरावधिद्योतनार्थं समस्तः प्रयोगः एव स्यात्' इत्यपि नियमः न स्यात् खलु?'

आ - आम्। पूर्वस्य उत्तरस्य वा अवधेः द्योतनार्थं व्यस्तः समस्तः वा प्रयोगः शक्यः। तन्नाम यथा इच्छामः तथा कर्तुं शक्नुमः। यत्र पञ्चमीश्रवणं (तन्नाम यत्र व्यस्तः प्रयोगः) तत्र पूर्वावधेः एव भानम् इति कश्चन भ्रमः अस्ति अस्माकम्। अनुभवस्य अपर्याप्तता एव अत्र कारणम्। किन्तु उत्तरावधिद्योतनार्थम् अपि व्यस्तः प्रयोगः कर्तुं शक्यः एव। अत्र प्रयोगप्रामाण्यं यथा–

१. भगवन्! ........ आ सुरपुष्पदर्शनात् (रघु-८.८१)

२. आ कैलासात् बिसकिसलय ......... (मे.दू.-पूर्वार्धे-११)

उदाहरणद्वये अपि उत्तरावधिः एव अर्थः। ('सुरपुष्पदर्शनपर्यन्तम्', 'कैलासपर्यन्तम्' इति।) अतः पूर्वस्य उत्तरस्य वा अवधेः द्योतनार्थं व्यस्तं वा समस्तं वा प्रयोगं कर्तुं शक्नुमः। प्रयोगे कामचारः अत्र।

---

*आङ् मर्यादाभिविध्योः – २-१-१३

**Statement about ownership of CHANDAMAMA (Sanskrit)**
**Rule 8 (Form VI), Newspapers (Central) Rules, 1956**

| | |
|---|---|
| *1. Place of Publication* | 'CHANDAMAMA BUILDINGS'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *2. Periodicity of Publication* | MONTHLY<br>Ist of each calender month |
| *3. Printer's Name* | B.V. REDDI |
| *Nationality* | INDIAN |
| *Address* | Prasad Process Private Limited<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *4. Publisher's Name* | B.VISWANATHA REDDI |
| *Nationality* | INDIAN |
| *Address* | Chandamama Publications<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *5. Editor's Name* | B.NAGI REDDI |
| *Nationality* | INDIAN |
| *Address* | 'Chandamama Buildings'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *6. Name and Address of individuals who own the paper* | CHANDAMAMA PUBLICATIONS<br>PARTNERS:<br>1. Sri B. VENKATRAMA REDDY<br>2. Sri B.V. NARESH REDDY<br>3. Sri B.V. SANJAY REDDY<br>4. Sri B.V. SHARATH REDDY<br>5. Smt. B. PADMAVATHI<br>6. Sri B.N. RAJESH REDDY<br>7. Smt. B. VASUNDHARA<br>8. Kum. B.L. ARCHANA<br>9. Kum. B.L. ARADHANA(Minor)<br>(Minor admitted to the benefits of Partnership)<br><br>'Chandamama Buildings'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |

I, B Viswanatha Reddi, hereby declare that the particulars given above are true to the best of my knowledge and belief.

**B. VISWANATHA REDDI**
*Signature of the Publisher*

*1st March 1991*

# चन्दमामा

संस्थापकः– **'चक्रपाणिः'** सञ्चालकः– **'नागिरेड्डी'**

**'वा**राङ्गनेव नृपनीतिः अनेकरूपा – नीतिशतककारस्य भर्तृहरेः वचनम् एतत्। त्रैकालिकं सत्यं प्रकाशितम् अस्ति कविना। 'न कश्चित् कस्यचित् बन्धुः, न कश्चित् कस्यचित् रिपुः' इति विषयः राजनीतौ सम्यक् अन्वेति। अद्यतनमित्रं श्वः शत्रुः स्यात्, श्वस्तनशत्रुः परश्वः मित्रं स्यात्। तत्रापि पक्षाधारिता राजनीतिः यत्र अस्ति तत्र मैत्री-शत्रुत्वयोः परिवर्तनम् असकृत् भवितुम् अर्हति।

मतिभेदे सत्यपि व्यावहारिकी मैत्री पौनःपुन्येन भवितुम् अर्हति। एषा मैत्री घटते विघटते च। वास्तविकी मैत्री च कष्टसाध्या। अतः एव 'सेतुबन्ध'कारः हालराजः वदति– 'अभिनवरागारब्धा च्युतस्खलितेषु विघटितपरिस्थापिता मैत्री निर्वोढुं दुष्करं भवति' इति। शत्रुता अप्रयत्नेनापि सिध्येत्। किन्तु मैत्री च महता प्रयत्नेन साधनीया भवति। एतया दृष्ट्या, जर्मनीदेशयोः ऐक्यम्, अमेरिका-रशियादेशयोः मैत्री इत्यादयः श्लाघ्याः प्रयत्नाः।

सम्पर्कसाधनानां बाहुल्यात् इदानीं वसुधा कुटुम्बकम् इव जाता अस्ति। अतः स्वसुखादिकस्य चिन्तनेन सहैव, परहितस्य हानिः यथा न स्यात् तथा जागरूकता अपि आश्रयणीया। द्वयोः देशयोः कलहः तटस्थेषु अपि इतरेषु देशेषु घोरं परिणामं जनयितुम् अर्हति एव। अतः जगति युद्धं यथा न प्रचलेत् तथा सङ्घटितप्रयत्नः अपि करणीयः अस्ति इदानीम्। एतस्यां दिशि प्रगतिः न साधिता चेत् सर्वेषु देशेषु निश्चिन्तस्थितिः स्वप्नमात्रं स्यात्।

सम्पुटः–७ मार्च्–१९९१ सञ्चिका–१२

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००






रसप्रश्नाः–

# कुम्भकर्णवधः

(युद्धे रावणस्य पक्षे बहवः शूराः दिवङ्गताः। अन्ते रावणः महता प्रयत्नेन स्वस्य अनुजं कुम्भकर्णं जागरितवान्। कुम्भकर्णः रावणं हितं बोधयित्वा रणरङ्गम् आगतवान्। प्रथमे दिने कुम्भकर्णस्य पराक्रमः विशेषतः अशोभत। एतदनन्तरीयां वाल्मीकिरामयणीयां घटनाम् आधारीकृत्य अधः केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तम् उत्तरं जानन्तु।)

I. वानरवीरान् खादन्तम् आगच्छन्तं कुम्भकर्णं लक्ष्मणः बाणैः तीव्रं व्रणितं कृतवान्। तदा कुम्भकर्णस्य का प्रतिक्रिया आसीत्?
(अ) कुपितः सन् गदया लक्ष्मणं प्रहृतवान्।
(आ) 'मम पुरतः धैर्येण स्थितः भवान् वीरः' इति उक्तवान्।
(इ) युद्धं कर्तुम् अशक्तः सन् दुर्गं प्रति गतवान्।

II. रामाभिमुखं गच्छतः कुम्भकर्णस्य अभिमुखं विभीषणः आगतवान्। तदा कुम्भकर्णः किं कृतवान्?
(अ) 'विश्वासघातक!, अपसरतु' इति विभीषणम् उक्तवान्।
(आ) 'दण्डयिष्यामि भवन्तम्' इति उक्त्वा बाणैः प्रहृतवान्।
(इ) 'रामम् आश्रयता भवता युक्तं कृतम्' इति उक्तवान्।

III. मुद्गरायुधसहितं कुम्भकर्णहस्तं रामः केन अस्त्रेण कर्तितवान्?
(अ) ऐन्द्रास्त्रेण। (आ) आग्नेयास्त्रेण। (इ) वायव्यास्त्रेण।

IV. कुम्भकर्णस्य पादौ काभ्याम् अस्त्राभ्यां कर्तितवान् रामः?
(अ) पाशुपतास्त्राभ्याम्। (आ) ऐन्द्रास्त्राभ्याम्। (इ) अर्धचन्द्रास्त्राभ्याम्।

V. हस्तपादविहीनः अपि सर्पणेन अग्रे आगच्छन्तं कुम्भकर्णं केन अस्त्रेण मारितवान् रामः?
(अ) ऐन्द्रास्त्रेण। (आ) अर्धचन्द्रास्त्रेण। (इ) पाशुपतास्त्रेण।

उत्तराणि–

I – (आ). II – (इ). III – (इ). IV – (इ). V – (अ).

# जपानदेशे नूतनः सम्राट्




फेसिफिक्महासागरस्य द्वीपानां समूहे जपानदेशे इदानीम् अपि अतिप्राचीनः राजवंशः अनुवर्तते। अत्रत्यः राजवंशः क्रि.पू. ६६० तमे वर्षे आरब्धः। एतद्देशीयाः जनाः सम्राजं दैवांशसम्भूतं भावयन्ति।

सहस्राधिकवर्षेभ्यः पूर्वम् एव बौद्धधर्मः भारतात् जपानदेशं गतः, तथापि जपानदेशीयाः १९ शतकं यावत् बाह्यप्रपञ्जस्य, तत्रापि विशिश्य पाश्चात्यदेशानां, सम्बन्धं न इच्छन्ति स्म।

किन्तु कालपरिवर्तनात् विचारे अपि परिवर्तनम् आगतम्। पाश्चात्यदेशानां सम्बन्धः तेन देशेन अङ्गीकृतः। इदानीम् एशियाखण्डे सुसम्पन्नः देशः जपान् इति अङ्गीक्रियते। अतिरस्करणीयशक्तिरूपेण प्रवृद्धः अस्ति स च देशः।

द्वितीय-जागतिकयुद्ध-सन्दर्भे जपानदेशेन हिट्लर्नायकत्वयुक्तस्य जर्मनीदेशस्य समर्थनं कुर्वता अमेरिकादेशः सम्मुखीकृतः। आरम्भिके स्तरे बहवः देशाः तेन जिताः च। किन्तु युद्धगतिः

खलु विचित्रा? जर्मन्देशस्य तन्मित्रदेशस्य च पराजयः जातः। जपान्देशः अमेरिकादेशं शरणं गन्तुं न इच्छति स्म। अतः अमेरिकादेशेन १९४५ तमे वर्षे अगस्ट्मासे ६ दिनाङ्के हिरोशिमानगरस्य उपरि अण्वस्त्रं पातितं, ९ दिनाङ्के च नागासाकीनगरस्य उपरि अपि अण्वस्त्रं पातितम्। अन्ते विवशः सम्राट् पराजयम् अङ्गीकृत्य आकाशवाणीद्वारा एतां वार्तां प्रसारितवान्। स्वदेशीयान् जनान् सः उक्तवान् यत् मयि काऽपि दैवांशशक्तिः नास्ति इति।

ततः आरभ्य तत्र सम्राट् नाममात्रेण। विशेषाधिकारः कोऽपि नास्ति तस्य। एवं स्थिते अपि 'सम्राट् दैवांशसम्भूतः' इति विश्वसन्तः सम्प्रदायवादिनः तत्र बहवः सन्ति। 'राजवंशसम्प्रदायः समूलम् उन्मूलनीयः' इति कथयन्तः उग्रवादिनः अपि तत्र सन्ति एव।

सम्राट् हिरो हिटो स्वस्य ८७ तमे वयसि १९८९ तमे वत्सरे दिवं गतः। तदीयः पुत्रः चतुःपञ्चाशद्वर्षीयः अकी हिटो तस्य उत्तराधिकारी जातः। सुदीर्घकालस्य अनन्तरं गतवर्षे नवम्बर्मासे टोकियोनगरे तस्य पट्टाभिषेकमहोत्सवः महता वैभवेन सम्पन्नः।

द्वितीय-जागतिकयुद्धस्य परिणामतः जपान्-देशः नष्टप्रायः आसीत्। किन्तु अल्पे एव काले तेन सर्वेषु क्षेत्रेषु प्रगतिः साधिता। 'पारिश्रमिकः देशः' इति तेन जगति ख्यातिः प्राप्ता। बहवः जपानदेशीयाः सम्राजं स्वजातेः एकताद्योतकं भावयन्ति।





# सात्त्विकः नन्दनः

वल्लभपुरे नन्दनः नाम कश्चन कृषिकः निवसति स्म। प्राचीने कुटीरे तस्य वासः। सामान्या अल्पा काचित् भूमिः तस्य सम्पत्तिः। सः प्रतिदिनं परिश्रमेण कार्यं करोति। यावत् प्राप्यते तावता एव तृप्तिम् अनुभवन् सुखेन जीवति।

नन्दनः सात्त्विकः प्रामाणिकः च। सात्त्विकः नन्दनः इत्येव ग्रामे इतरत्र च तस्य प्रसिद्धिः आसीत्। सः कमपि कटुवचनं न वदति, कमपि न खेदयति वा। कोऽपि निन्दति चेदपि एषः शान्तः एव तिष्ठति।

नन्दनस्य एतादृशीं परमसात्त्विकतां दृष्ट्वा कदाचित् जनाः तं वदन्ति स्म– "भोः, भवान् सर्वथा मूर्खः। एतस्मिन् लोके स्थातुम् अनर्हः च" इति।

तदा हसन् वदति नन्दनः– "किं करोमि? भगवता अहम् एवं सृष्टः। तेन अहम् अत्र प्रेषितः। अतः अत्र स्थित्यर्थम् अर्हता नास्ति चेदपि मया स्थातव्यम् एव" इति।

तस्मिन् ग्रामे एकः बालकः आसीत्। मातापित्रोः वियोगात् सः निर्गतिकः जातः आसीत्। नन्दनेन स च बालकः पालनार्थं स्वीकृतः। इदानीं नन्दनः एव तस्य बालकस्य सर्वस्वम्। ग्रामीणाः अपि तं बालं नन्दनपुत्रः इत्येव वदन्ति स्म। सः बालकः नन्दनस्य प्राणप्रियः एव आसीत्।

एतस्मिन् वर्षे नन्दनस्य क्षेत्रे सस्यसमृद्धिः सम्यक् आसीत्। द्विगुणितं धान्यं प्राप्येत इति नन्दनस्य निरीक्षा। इतःपूर्वं सः महान्तं श्रमं कृत्वा अपि अल्पं प्रतिफलं प्राप्तवान् आसीत्। अस्मिन् वर्षे तु श्रमानुगुणं प्रतिफलं प्राप्येत इति निरीक्ष्यते। एतेन नितरां सन्तुष्टः अस्ति नन्दनः। प्रतिदिनं क्षेत्रं गत्वा पक्वतां प्राप्नुवन्ति कणिशानि तृप्त्या पश्यति सः।



'वर्षद्वयात् गृहस्य उपरि छादितानि तृणानि न परिवर्तितानि। धनाभावः तत्र कारणम् आसीत्। अस्मिन् वर्षे नूतनैः तृणैः गृहम् आच्छादयामि। तदा वर्षाकाले जलस्रवणस्य अभावात् निश्चिन्तता स्यात्। मम वृषभौ अपि वृद्धौ। एतयोः इतःपरं विश्रान्तिजीवनं भवतु। नूतनौ तरुणौ दृढौ वृषभौ क्रेष्यामि। पुत्रस्य एकम् अपि उत्तमं वस्त्रं नास्ति। अतः चत्वारि युतकानि अर्धोरुकाणि च तस्य निमित्तं कारयिष्यामि'... एवं प्राप्यमाणस्य धनस्य अनुगुणं योजनां कुर्वन् अस्ति नन्दनः।

सस्यलवनकालः आसन्नः। तादृशे काले कदाचित् सायङ्काले अकस्मात् आकाशे मेघाः सम्मिलिताः। मेघगर्जनं श्रुतम्। तडितः स्फुरिताः। वायुश्च वेगेन वाति। अल्पे एव काले मुसलधारावृष्टिः आगता। प्रातःकालं यावत् एतादृशी एव वृष्टिः।

ग्रामस्य पार्श्वे एव नदी प्रवहति। नद्यां भीकरः महापूरः आगतः। लवनार्थं सिद्धानि धान्यानि इदानीं प्रवाहे पतितानि। जनाः एतत् दृष्ट्वा हाहाकारं कुर्वन्ति। किन्तु प्रवाहं रोद्धुं को वा शक्नोति?

'तस्य क्षेत्रं जलावृतं जातम्' इति वार्ता निवेदयति कश्चित्। 'एतस्य क्षेत्रम् अपि जलावृतं जातम्' इति वार्तां निवेदयति अन्यः। एतादृशीः वार्ताः शृण्वन्तः जनाः खेदम् अनुभवन्तः दैन्येन भगवन्तं प्रार्थयन्ति— 'भगवन्! रक्षतु अस्मान्। वृष्टिम् उपसंहरतु' इति।

आतङ्कम् अनुभवन् नन्दनः स्वक्षेत्रस्य समीपं गतवान्। तस्य क्षेत्रस्य अल्पः भागः एतावता जलावृतः आसीत्। प्रवाहः तु क्षणे क्षणे वर्धमानः एव अस्ति।

एतत् दृष्ट्वा कुपितः नन्दनः— "अये प्रवाह! आवर्षं परिश्रमं कृत्वा मया महता श्रमेण सस्यानि वर्धितानि। भवान् तु क्षणमात्रेण पक्वानि तानि धान्यानि नाशयन् अस्ति। एतत् कदापि न भवेत्। भवतः निर्दयं व्यवहारम् अहं न सहे। अये, तिष्ठतु तावत्। मम कोपं मा वर्धयतु। क्रुद्धः अहं किं कुर्यां जानाति वा? दण्डेन प्रहृत्य भवन्तं प्रतिनिवर्तयिष्यामि। पश्यतु तावत्" इति वदन् कोपेन हस्तस्थितं दण्डं आकाशे

इतस्ततः चालितवान्।

अहो आश्चर्यम्! महापूरस्य क्षेत्राक्रमणं स्थगितम्। यत् जलं नन्दनस्य क्षेत्रं प्रविष्टम् आसीत् तत् अपि ततः निर्गतम्। महापूरः किञ्चित् वक्रगत्या प्रवहन् नन्दनस्य क्षेत्रम् अस्पृशन् एव प्रवहति। अतः नन्दनस्य क्षेत्रस्य अल्पा अपि हानिः न जाता।

एतत्सर्वं दृष्ट्वा नन्दनः सन्तोषेण उक्तवान्– ''मम आशयं जानन् वचनं पालयन् अस्ति खलु प्रवाह! पश्यतु, एतेन मम कोपः उपशान्तः'' इति।

एषा घटना ग्रामीणैः कैश्चित् प्रत्यक्षं दृष्टा। ते आश्चर्यम् अनुभवन्तः अन्यान् ग्रामीणान् प्रवृत्तं समग्रं निवेदितवन्तः। पुनः अल्पे एव काले समीपस्थेषु ग्रामेषु अपि एषा वार्ता प्रसृता।

'नन्दने काऽपि विशिष्टा शक्तिः अस्ति। अतः एव सः प्रवाहं रुद्ध्वा स्वक्षेत्रं रक्षितवान्' इति भावितवन्तः जनाः। ते वल्लभपुरम् आगत्य प्रवाहपीडां किञ्चिदपि अननुभूतवतः नन्दनक्षेत्रस्य दर्शनं प्राप्य नन्दनस्य श्लाघनं कुर्वन्तः प्रतिगतवन्तः।

ततः अल्पे एव काले अन्या आश्चर्यकरी घटना अपि प्रवृत्ता। चतुर्वर्षीयः नन्दनस्य पुत्रः क्रीडन् अकस्मात् कूपे पतितः। एतां वार्तां श्रुत्वा नन्दनः क्षेत्रतः धावन् आगतवान्। बालकस्य रक्षणार्थं केनापि कोऽपि प्रयत्नः न कृतः आसीत्।




नन्दनः कोपेन कूपं पश्यन्– ''एषः मम पुत्रं गिलेत् वा? न कदापि एवं भवेत्। एषः कूपः एतत्क्षणे एव शुष्कः सन् सिकताभिः पूर्णः स्यात्'' इति उक्तवान्।

पुनश्च किं वक्तव्यं, कूपः जलरहितः जातः, सिकतामयश्चापि जातः। नन्दनस्य पुत्रः हसन् सिकताराशितः आगत्य पितुः पार्श्वे स्थितवान्। नन्दनः आनन्दातिरेकेण पुत्रम् आलिङ्गितवान्। जनाः एतत्सर्वम् आश्चर्येण पश्यन्ति।

एतया घटनया निश्चितम् अभवत् यत् नन्दने अपूर्वशक्तिः अस्ति इति। एतादृशीनां वार्तानां प्रसारे कदापि विलम्बः न भवति खलु? सुदूरग्रामात् अपि जनाः नन्दनस्य दर्शनं प्राप्तुम् आगन्तुम् आरब्धवन्तः।




आगताः ते फलानि पुष्पाणि च समर्पितवन्तः। जनानाम् आगमनात् नन्दनस्य दैनन्दिनकार्येषु विघ्नाः उत्पन्नाः। कृषिक्षेत्रे पादं स्थापयितुम् अपि सः समयं न प्राप्नोति।

एवं स्थिते कदाचित् नन्दनः स्वपुरतः स्थितान् अभिमानिनः पश्यन् कोपेन उक्तवान्– "भवन्तः सर्वे एतं कुटीरं मन्दिरं भावयन्ति। भवतु नाम तदपि" इति।

अहो आश्चर्यम्! तत्र एकं मन्दिरम् उद्भूतम् एव! जनेषु पश्यत्सु कुटीरस्य छदिः उपरि गता। मन्दिरं च क्रमशः प्रवृद्धम्। अन्ते उद्भूतस्य मन्दिरस्य शिखरभागे छदिः लुप्ता जाता। जनाः आश्चर्येण भक्त्या च एतां घटनां दृष्टवन्तः। नन्दनः तु एतत् दृष्ट्वा उच्चध्वनिना हसन् अस्ति!

तावता आकाशे विद्युत्स्फुरणं जातम्। काचित् अशरीरवाणी च श्रुता– "महात्मानः सात्त्विकाः च प्रायः कुपिताः न भवन्ति। किन्तु यदि ते कुपिताः भवन्ति तर्हि तेषां मुखात् यत् निर्गच्छति तत् प्रचलति एव। सज्जनानां प्रामाणिकानां च मनसः नैर्मल्यं दृष्ट्वा भगवान् सन्तुष्टः सन् एवं कारयति। अतः सा सात्त्विकता पूजनीया" इति।

तदा तत्र सम्मिलिताः जनाः एकस्वरेण उक्तवन्तः– "एवं तर्हि सात्त्विकतायाः आश्रयः नन्दनः भगवान् एव" इति।

जनानाम् एतां प्रतिक्रियां श्रुत्वा नन्दनः हस्तौ उन्नीय उच्चैः उक्तवान्– "अहं कश्चन सामान्यः मानवः। अहं न भगवान्" इति।

अत्र प्रवृत्तं समग्रं श्रुत्वा आगतः ग्रामप्रमुखः नन्दनं प्रीत्या आलिङ्गितवान्। नन्दनः इदानीं गृहरहितः खलु? अतः तस्य वसत्यर्थं समीचीनं गृहं निर्माय दत्तवान् ग्रामप्रमुखः।

मन्दिरं मूर्तिरहितं स्थातुं न अर्हति। किन्तु मन्दिरे कीदृशी मूर्तिः स्थापनीया इत्येव समस्या। नन्दनस्य आशयः अस्ति यत् सात्त्विकतायाः प्रतीकरूपमूर्तिः तत्र स्थापनीया इति। 'सात्त्विकता अमूर्तः गुणः। तर्हि तस्य प्रतीकं कीदृशं स्यात्?' इति चिन्तयति ग्रामप्रमुखः। योग्यं निर्णयं

स्वीकर्तुम् अशक्तः सः स्वग्रामे इतरत्र च उद्घोषितवान् यत् यः सात्त्विकतायाः प्रतीकस्य स्वरूपं निर्दुष्टं कथयति तस्मै विशेषपारितोषिकं दीयते इति।

दिनानि गतानि। सात्त्विकतायाः प्रतीकस्य स्वरूपं कोऽपि वक्तुं न शक्तवान्। अस्मिन् एव काले नन्दनः वार्धक्यकारणतः शय्याम् आश्रितवान्। वैद्याः तस्य चिकित्सां कृतवन्तः। वैद्यानां प्रयत्नाः विफलाः एव। नन्दनः उक्तवान्– "मम अन्तिमदिनम् आसन्नम्" इति।

तदा ग्रामप्रमुखः पृष्टवान्– "भवतः इच्छा काऽपि अपूरिता अस्ति वा?" इति।

"जीवने यद्यत् प्राप्तव्यं तत्सर्वं प्राप्तं मया। अतः न काऽपि अतृप्तिः। किन्तु एकम् अल्पं दुःखं नाम तत् उद्भूतं मन्दिरम् इतोऽपि मूर्तिरहितम् अस्ति इति। तत्र यावच्छीघ्रं मूर्तिः प्रतिष्ठापनीया" इति उक्तवान् नन्दनः।

अनन्तरदिने प्राणैः वियुक्तः जातः नन्दनः। जनाः नन्दनस्य सद्गुणानां कीर्तनं कृतवन्तः। ततः अल्पे एव काले विग्रहप्रतिष्ठापनविषये सभा प्रवृत्ता।

तस्यां सभायां कश्चित् ज्येष्ठः उक्तवान्– "नन्दनः स्वगुणैः भगवन्तं तोषितवान् आसीत्। भगवतः अंशैः युक्ताः एव एवं गुणशीलाः भवन्ति, नान्ये। अतः नन्दनस्य मूर्तिः एव मन्दिरे प्रतिष्ठापनीया। सात्त्विकतायाः प्रतीकं सः एव" इति। तत्र उपस्थिताः सर्वे एतं विचारम् अङ्गीकृतवन्तः। नन्दनस्य विग्रहः कारितः। योग्ये मुहूर्ते स च विग्रहः मन्दिरे प्रतिष्ठापितः च।

मन्दिरम् आगताः जनाः नन्दनस्य मूर्तिं दृष्ट्वा वदन्ति स्म– "सात्त्विकानां हृदये भगवान् निवसति। अतः ते भगवत्स्वरूपाः। ते सदा पूजाम् अर्हन्ति" इति।

एवं अल्पे कुटीरे जातः सामान्यः नन्दनः मरणानन्तरं मन्दिरे स्थानं प्राप्य 'सात्त्विकतायाः प्रतीकम्' इति ख्यातिं प्राप्तवान्।



# पुरस्कारः

अनन्तः राजास्थाने कश्चन लिपिकारः। कदाचित् धनागारे महत् चौर्यं जातम्। अनन्तः स्वबुद्धिमत्ताम् उपयुज्य चोरग्रहणे विशेषसाहाय्यं कृतवान्। एतेन सन्तुष्टः राजा अनन्ताय एकं सुवर्णाङ्गुलीयकं पुरस्काररूपेण दत्तवान्।

नरेन्द्रः नाम कश्चित् तस्मिन् एव आस्थाने उच्चोद्योगे अस्ति। तेन कदाचित् एकं वञ्चनाप्रकरणं प्रकाशितम्। वञ्चकः कारागारे स्थापितः। तदा राजा तस्य राजोद्योगिनः प्रामाणिकतां प्रशंसन् पुरस्काररूपेण सहस्रं सुवर्णनाणकानि आभरणानि च दत्तवान्।

एतत् अनन्तेन अपि ज्ञातम्। एतत् श्रुत्वा सः नितरां खिन्नः। सः कदाचित् महाराजसमीपं गत्वा उक्तवान्– "प्रभो! मया पूर्वं महत् चौर्यं प्रकाशितम्। तदा भवान् पुरस्काररूपेण मह्यम् एकम् अङ्गुलीयकं दत्तवान्। नरेन्द्रवर्यः तु सामान्यं वञ्चनाप्रकरणं प्रकाशितवान्। तस्मै तु भवान् पुरस्काररूपेण सुवर्णनाणकानि आभरणानि च दत्तवान्। वस्तुतः तु विशेषपुरस्कारः मह्यं दातव्यः आसीत्। किन्तु भवता एतद्विरुद्धं कृतम्। एवं किमर्थम्? भवतः व्यवहारे दोषं प्रदर्शयन् अस्मि इति मा भावयतु कृपया। मम मनसि आगतं सन्देहं निष्कपटतया भवतः पुरतः प्रकटयन् अस्मि" इति।

तदा राजा हसन् उक्तवान्– "अनन्त! सन्देहः यत्र निवेदनीयः तत्रैव निवेदितः भवता। अतः अहं सन्तुष्टः अस्मि। यत्र निवेदनेन सन्देहः निवृत्तः न भवति तत्र, कदापि सन्देहः न निवेदनीयः। तदस्तु। तोषणार्थं खलु पुरस्कारः दीयते? अङ्गुलीयकदानेन भवान् सन्तुष्टः जातः। सत्कार्यं कृतवतः नरेन्द्रस्य तोषणम् अपि मम कर्तव्यम्। तस्य स्थानस्य अनुगुणं मया पुरस्कारः दत्तः, येन सः सन्तुष्टः स्यात्। तत्तस्य स्तरस्य अनुगुणं वेतनं यथा दीयते तथैव पुरस्कारः अपि तत्तस्य स्तरानुगुणम् एव दीयते" इति।

राजा यत् वदति तत्र औचित्यम् अस्ति इति भावयन् अनन्तः समाहितः सन् ततः निर्गतवान्।





# लुप्तकः युवराजः

## १७

(वीरसिंहेन शान्तिपुरं प्रति नीयमाना सुकन्या मूर्च्छाम् अभिनयन्ती सख्याः उपरि पतितवती। तदा तस्याः चिकित्सार्थं विश्रान्त्यर्थं च व्यवस्था कृता वीरसिंहेन। सायं सः सुकन्यां द्रष्टुं शिबिरप्रकोष्ठं प्रविष्टवान्। युवराज्ञ्याः मञ्चे शयितः कश्चन कपिः वीरसिंहं व्रणितं कृत्वा पलायितवान्। मन्त्रप्रभावतः युवराज्ञी कपिरूपं प्राप्तवती इति भावितवान् वीरसिंहः। तदनन्तरम्......।)

''कपिं गृह्णन्तु। मा त्यजन्तु। मन्त्रजालं छेत्तव्यम् अस्माभिः'' इति उच्चैः वदन् वीरसिंहः शिबिरप्रकोष्ठात् धावन् बहिः आगतवान्। वीरसिंहस्य एतं व्यवहारम् आश्चर्येण पश्यन्ति सैनिकाः। किं प्रवर्तमानम् अस्ति इति क्षणकालं न ज्ञातं तैः।

'केनापि मान्त्रिकेण सुकन्या कपिरूपेण परिवर्तिता' इति वीरसिंहस्य भावना। किन्तु वस्तुस्थितिः तु अन्या एव। चिकित्सार्थम् अनुयायिभिः आगतेन वैद्येन सह राजकुमारी वेषान्तरेण निर्गता आसीत्। सः वैद्यः तु गोण्यां पूरयित्वा आनीतं पालितं कपिं शय्यायां शाययित्वा निर्गतः आसीत्। तदनुयायिनश्च उपायेन पलायितवन्तः आसन्।

''शङ्करवर्मणा मान्त्रिकद्वारा एतत्सर्वं कारितम्। प्रथमं सः कपिः कथमपि



ग्रहीतव्यः। अनन्तरं दुष्टः शङ्करवर्मा अत्युग्रं दण्डनीयः'' इति कोपेन उक्तवान् वीरसिंहः।

'राजकुमारी अदृश्यतां गता यत् तत्र मान्त्रिकशक्तिः न कारणम्, अपि तु मानवशक्तिः एव कारणम्। वैद्यरूपेण आगतः एव एतत् कृत्यं कृतवान्' इति जानाति सर्वदमनः। 'किन्तु एषः विषयः उक्तः चेत् आत्मनः असामर्थ्यं स्वयम् अङ्गीकृतं भवति। एतत्सर्वं मान्त्रिकशक्तिकारणतः प्रवृत्तम् इति राजा स्वयं वदन् अस्ति। अत्र सहमतिः प्रदर्शिता चेत् मानः रक्षितः भवति' इति आलोच्य सः राजानम् उक्तवान्– ''महाप्रभो, मान्त्रिकशक्तिः मान्त्रिकशक्त्या एव जेतव्या। इदानीं नान्या गतिः। अस्माकं देशे समर्थाः मान्त्रिकाः बहवः सन्ति। तेषु कञ्चित् आनाय्य कार्ये योजयाम'' इति।

''एतत् अङ्गीकृतं मया। किन्तु तादृशः मान्त्रिकः भवता कोऽपि ज्ञायते वा? सः कुत्र निवसति? अविलम्बेन तम् अत्र आनाययतु। एतदर्थं धनव्ययः यावद् वा भवतु नाम, वयं दातुं सिद्धाः'' इति उक्तवान् वीरसिंहः।

''मान्त्रिकम् अहं घण्टाभ्यन्तरे आनाययितुं शक्नोमि। किन्तु ततः पूर्वं सः कपिः ग्रहीतव्यः खलु? कपेः अभावे सः कं वा युवराज्ञीरूपेण परिवर्तयेत्? किन्तु अरण्ये कपयः असङ्ख्याः। तेषु, इतः पलायितः कः इति कथं वा ज्ञातुं शक्येत?'' इति उक्तवान् सर्वदमनः।

वीरसिंहः यावत् किमपि वक्तुम् उद्युक्तः तावता कश्चन शुकः तस्य समीपम् आगच्छत्। वेणुसदृशं किञ्चन वस्तु वीरसिंहस्य पुरतः पातयित्वा उड्डीय अगच्छत् च। एतां घटनाम् आश्चर्येण पश्यन् स्थितवान् वीरसिंहः। शुकेन दण्डाकारेण पुटीकृतं पत्रं तत्र पातितम् आसीत्। सर्वदमनः तत् पत्रम् उन्नीय वीरसिंहस्य हस्ते अर्पितवान्। वीरसिंहः पत्रम् उद्घाट्य दृष्टवान्।

पत्रे एवं लिखितम् आसीत्– ''वीरसिंह! कपिरूपेण निर्गतायाः राजकुमार्याः ग्रहणे व्यर्थः प्रयासः मास्तु भवतः। एतस्मिन् प्रयत्ने

भवान् कदापि जयं प्राप्तुं न अर्हति। पुनः पुनः असाफल्यं प्राप्नुवन् अपि भवान् इतोऽपि विवेकं कुतो वा न प्राप्नोति? इदानीम् इतः मौनं शान्तिपुरं प्रतिगच्छतु। शङ्करवर्मणः, जयपुरीप्रजानां वा पीडने भवान् उद्युक्तः भवति चेत् स्वयं प्राणैः वियुक्तः भवेत्। जागरूको भवतु। युवराजस्य सन्दीपस्य आज्ञा एषा" इति।

"कोऽयं युवराजः सन्दीपकुमार.? महाराजं माम् एव आज्ञास्वरेण उपदिशति खलु एषः!" इति क्रोधेन उक्तवान् वीरसिंहः।

एतादृशं जागरूकतासूचकं पत्रम् इतः पूर्वं सर्वदमनेन अपि प्राप्तम् आसीत्। तां वार्तां वीरसिंहं न निवेदितवान् आसीत् सः। सन्दीपकुमारः कः इत्यपि न जानाति सः। तथापि सः उक्तवान्– "प्रभो! लुण्ठाकानां नायकः स्यात् सः। युवराजपदेन वृथा आत्मानं ख्यापयन् स्यात्" इति।

"स्यात् नाम तथा। किन्तु युवराजपदेन व्यवहरतः एतस्य दौष्ट्यं तु सर्वथा दुःस्सहम्। गणनासाध्यानां केषाञ्चित् दुष्टानां नायकः एषः अपारं मम सैन्यं किं सम्मुखीकुर्यात्? अल्पबलः एषः स्वसाहाय्येन सेनारहितां जयपुरीं कथं वा रक्षेत्? महती मूर्खता! अद्यैव जयपुर्याः उपरि आक्रमणं करणीयम्। किम् एतदर्थं सेना सन्नद्धा अस्ति?" इति सर्वदमनं पृष्टवान् वीरसिंहः।

"सेनायाः सज्जीकरणं क्षणमात्रस्य



कार्यम्। अन्यच्च सेनारहिता जयपुरी किं युद्धं कुर्यात्? अस्माकं गमनमात्रेण एव इष्टं सेत्स्यति" इति उक्तवान् सर्वदमनः।

"अये, भवान् सेनापतिः। सामान्यः इव मा व्यवहरतु। युद्धादिविषये दूरदृष्टिः समग्रचिन्तनं च आवश्यकं भवतः। एतत् पत्रं यः लिखितवान् सः पर्याप्तमात्रेण सन्नाहं कृत्वा एव पत्रं लिखितवान् स्यात्। अमृतपुरी जयपुरीपक्षं समर्थयति इति भवान् स्मरति खलु? अमृतपुरीसेनां सम्मुखीकर्तुम् अस्माकं सेनासामर्थ्यम् अस्ति वा?" इति पृष्टवान् वीरसिंहः।

"अमृतपुर्याः सेनाबलम् एषु दिनेषु चतुर्गुणितं प्रवृद्धम् इति श्रूयते। अतः तत् बलं



परिहृता स्यात्" इति उक्तवान् सर्वदमनः।

"रहस्यनिधिः! रहस्यनिधिः!" इति स्वगतं वदन् किञ्चित्कालं चिन्तामग्नः जातः वीरसिंहः।

झटिति तस्य मनसि कश्चन विचारः स्फुरितः– 'प्राचीनेषु भवनेषु रहस्यनिधिः भवति इति श्रूयते। शान्तिपुरे राजभवने अपि तादृशः भागः कुतो वा न स्यात्? स्यात् एव। अन्वेष्टव्यम् एतत्' इति।

"हुँ, इदानीं राजभवनं गच्छाम वयम्" इति उक्त्वा अश्वम् आरूढवान् वीरसिंहः। सर्वदमनः अपि तम् अनुकुर्वन् अश्वम् आरूढवान्। सेना तौ अनुसृतवती।

* * * *

सम्मुखीकरणीयं चेत् अस्मदीयं सैन्यबलं वर्धनीयम् एव। अन्यथा युद्धसाहसम् आत्मनाशाय भवेत्। अमृतपुर्याः गूढचराः जयपुर्याम् इतरत्र च विशेषतः सञ्चरन्तः सन्ति इति वार्ता मया अपि श्रुता" इति उक्तवान् सर्वदमनः।

"भवान् प्राचीनं वचनम् एव पुनः उद्धरति। सैन्यबलस्य वर्धनं कथम्? आयुधादीनां क्रयणार्थं धनं धान्यसङ्ग्रहः वा नास्ति अस्माकम्। एतस्मिन् विषये इतः पूर्वम् अस्माभिः कृताः सर्वे यत्नाः विफलाः। दैवम् अपि अस्मद्विरुद्धम् एव फलं प्रदर्शयति" इति खेदेन उक्तवान् वीरसिंहः।

"रहस्यनिधिः कोऽपि लब्धः चेत् समस्या

रात्रौ निद्रा न प्राप्ता वीरसिंहेन। रहस्यनिधेः प्राप्तिः कथम् इत्येव तस्य चिन्ता। अनन्तरदिने सः सर्वदमनेन सह गत्वा राजभवनस्य सर्वान् प्रकोष्ठान् उद्घाट्य परिशीलितवान्। राजसेवातः निवृत्तौ उभौ परमवृद्धौ आनाय्य सः उक्तवान्– "भवन्तौ चिरकालात् राजभवने कार्यं कृतवन्तौ। अदृष्टपूर्वः प्रकोष्ठः भवद्भ्यां ज्ञातः चेत् निर्वञ्चनं वक्तव्यम्। तेन यदि मम लाभः स्यात् तर्हि भवन्तौ पारितोषिकं प्राप्स्यतः। ज्ञातः विषयः मत्तः गोपितः चेत् चित्रहिंसा प्राप्येत" इति।

राजाज्ञां शिरसा वहन् तयोः अन्यतमः वीरसिंहम् अन्धकारमयं प्रदेशं नीतवान्।

सर्वदमनः तौ अनुसृतवान्। अन्धकारे एव भित्तेः पार्श्वे अल्पे मार्गे ते किञ्चिद्दूरं गतवन्तः। तत्र कीलितः कश्चन प्रकोष्ठः अभिमुखं दृष्टः। तालरन्ध्रम् अयस्किट्टैः आवृतम् आसीत्।

वीरसिंहः सर्वदमनः च सम्भूय महता प्रयासेन तालं भञ्जितवन्तौ। अल्पं दीपं स्वीकृत्य प्रकोष्ठं प्रविष्टवन्तौ च। प्रकोष्ठे बह्व्यः पेटिकाः स्थापिताः आसन्। वीरसिंहः एकां पेटिकाम् उद्घाटितवान्। पेटिकायाः अन्तः विविधानि सुवर्णाभरणानि!

"सर्वदमन! अस्माकम् आशा पूर्णा। समस्या परिहृता अभवत्। एतेषां मूल्यं कियत् स्यात् इति निश्चेतव्यम्। अनन्तरम् आभरणक्रयणविचारः" इति उक्तवान् वीरसिंहः।

"चन्द्रपुर्याः वणिजः एव एतदर्थम् आनेतव्याः। आभरणानां मूल्यं निर्णीय कथयन्ति ते। आयुधक्रयणे अपि ते एव साहाय्यं कर्तुम् अर्हन्ति। अन्यच्च ते आनीताः चेत् आभरणप्राप्तिवार्तारहस्यं प्रकटितम् अपि न भवेत्" इति उक्तवान् सर्वदमनः।

"मूल्यनिश्चयस्य अनन्तरं कानिचन प्रमुखानि आभरणानि केवलम् अस्मत्समीपं संस्थाप्य अवशिष्टानि आभरणानि दत्त्वा आयुधानि क्रेतव्यानि। ततः सैन्यबलं वर्धनीयम्। सैन्यबलं प्रवृद्धं चेत् अमृतपुरीं किं, समग्रं जगत् एव धूलिसात्कर्तुं शक्नुयाम



वयम्" इति उत्साहेन उक्तवान् वीरसिंहः।

अनन्तरं महता तालेन प्रकोष्ठं कीलयित्वा प्रत्यागतवन्तौ वीरसिंह-सर्वदमनौ।

अनन्तरदिने विश्वासार्हान् वणिजः आनेतुं चन्द्रपुरीं प्रति समर्थान् दूतान् प्रेषितवान् वीरसिंहः। दूताः प्रत्यागत्य निवेदितवन्तः यत् दिनत्रयाभ्यन्तरे निपुणाः वणिजः आगमिष्यन्ति इति।

ततः तृतीये दिने गूढचरः कश्चित् आगत्य वीरसिंहं निवेदितवान्– "प्रभो, चन्द्रपुरीतः पञ्चविंशतिः निपुणाः वणिजः आगच्छन्तः सन्ति" इति।

"पञ्चविंशतिः वणिजः! मया चिन्तितम् आसीत्– पञ्चषाः आगच्छेयुः इति। मयि



आदरं प्रकटयन्तः ते कार्यं त्वरया समापयितुम् इच्छन्तः एवम् अधिकसङ्ख्यया आगच्छन्तः स्युः। सर्वदमन! तेषां वसत्यर्थं राजभवने एव व्यवस्थां करोतु। उत्तमा पाकव्यवस्था अपि भवतु। तान् यदि वयं सन्तोषयेम तर्हि अग्रे महान् लाभः स्यात्'' इति आज्ञापितवान् वीरसिंहः।

ते वणिजः सूर्यास्तसमये शान्तिपुरं प्राप्तवन्तः। वीरसिंहः स्वयं दुर्गद्वारसमीपं गत्वा तान् स्वागतीकृतवान्। तान् रहस्यप्रकोष्टं नीत्वा पेटिकाः उद्घाट्य आभरणानि प्रदर्शितवान्।

आभरणानां रत्नादीनां च राशिं दृष्ट्वा ते वणिजः आश्चर्यं प्रकटयन्तः– ''राजन्! भाग्यशाली भवान्। ऐश्वर्येण भवान् इदानीं कुबेरम् अपि अतिशेते'' इति उक्तवन्तः।

अनन्तरं भोजनं प्रवृत्तम्। भोजनानन्तरं वणिजां प्रमुखः वीरसिंहम् उक्तवान्– ''महाराज! यः निधिः लब्धः तत्र बहुविधानि आभरणानि सन्ति। प्रथमं तत्तत्स्तरानुगुणं तानि विभक्तव्यानि। हारेषु अन्यविधेषु आभरणेषु च रत्नानि तत्र तत्र सन्ति। तेषां परीक्षा करणीया। अनन्तरं मौल्यनिश्चयः। एतदर्थं महान् समयः अपेक्ष्यते। विशालः अवकाशः अपि अपेक्ष्यते। अतः रहस्यप्रकोष्ठस्थाः पेटिकाः प्रधानमण्डपम् आनीय अत्र वयम् अस्मदीयानि कार्याणि कुर्मः। मण्डपस्य द्वारं कीलितं भवतु। रक्षणार्थं भवान् स्वयं तिष्ठतु। प्रातःकालाभ्यन्तरे वयम् अस्मदीयं कार्यं समापयामः। श्वः प्रातः भवान् स्वस्य ऐश्वर्यस्य परिमाणं निष्कृष्टं ज्ञास्यति'' इति।

''भवन्तः यथा इच्छन्ति तथा आनुकूल्यं कल्पयिष्यामि'' इति वदन् वीरसिंहः मण्डपे आभरणपेटिकास्थापनार्थं व्यवस्थां कृत्वा मण्डपस्य द्वारं कीलितवान्। रक्षणार्थं स्वयम् उपविष्टवान् अपि।

मध्यरात्रपर्यन्तम् अपि मण्डपे आभरणध्वनिः श्रूयते स्म। रक्षणार्थम् उपविष्टः वीरसिंहः तत्रैव लघुनिद्रां प्राप्तवान्।

उषःकाले सः जागरितः। तत्समये मण्डपे कोऽपि ध्वनिः न श्रूयते स्म। 'कार्यं समाप्य

श्रान्त्या सर्वे वणिजः तत्रैव निद्रां गताः स्युः' इति चिन्तयन् वीरसिंहः तालम् अपनीय मण्डपस्य अन्तः गतवान्। सर्वदमनः तम् अनुसृतवान्। किन्तु मण्डपे किम् अस्ति? न किमपि! न वणिजः, न वा आभरणानि!

"वणिजः कुत्र? आभरणपेटिकाः कुत्र? मम ऐश्वर्यं कुत्र? ..." इति वदन् उद्विग्नः वीरसिंहः इतस्ततः अन्वेषणं करोति। सर्वदमनः अपि अन्वेषणे उद्युक्तः जातः।

"हा हन्त! सर्वं लुण्ठितम्! हा हतोऽस्मि! सर्वस्वम् अपहृतम्! द्वारं कीलितं चेदपि ते केन मार्गेण पलायितवन्तः? कथम् आभरणानि नीतवन्तः? का एषा माया?" इति उच्चस्वरेण बहुधा वदन् अस्ति वीरसिंहः।

तावता राज्ञ्याः शयनागारस्य रहस्यद्वारम् उद्घाटितम् अस्ति इति अंशः ज्ञातः सर्वदमनेन। "राज्ञीप्रकोष्ठे रहस्यद्वारम् अस्ति इति जानन्तः ते वणिग्वेषधारिणः लुण्ठाकाः मण्डपे आभरणपरीक्षाकार्यं कुर्मः इति उक्तवन्तः। तादृशः रहस्यमार्गः तत्र अस्ति इति अजानन्तः वयं तेषां प्रार्थनाम् अङ्गीकृतवन्तः। अतः एव ते लुण्ठाकाः सूर्यास्तसमये उपस्थाय रात्रौ कार्यं आरभ्य सर्वं लुण्ठितवन्तः" इति ऊहाबलेन तर्कितां वस्तुस्थितिं राजानं निवेदितवान् वीरसिंहः।

आभरणापहतृभिः एकं पत्रं तत्र स्थापितम् आसीत्। पत्रे एवं लिखितम् आसीत्— "राजकुटुम्बसम्बन्धीनि आभरणानि योग्यस्य उत्तराधिकारिणः समीपे सुरक्षितं सन्ति। युवराजः सन्दीपकुमारः तेषां स्वामी। अतः आभरणानां विषये चिन्तनं मास्तु भवताम्। चन्द्रपुरीतः आगताः वणिजः दक्षिणदिशि स्थितस्य पर्वतस्य खाते बद्धाः सन्ति। अतः त्वरया दूतान् सम्प्रेष्य तान् बन्धविमुक्तान् कुर्वन्तु। दूताः रज्जुच्छेदनार्थम् आवश्यकम् आयुधम्, आहारवस्तूनि च स्वीकृत्य एव तत्र गच्छन्तु" इति।

वीरसिंहः भटैः सह गत्वा चन्द्रपुरीवणिजः बन्धमुक्तान् कृतवान्।

–(अग्रिमसञ्चिकायां समाप्यते।)






# आत्मकेन्द्रितनिर्णयः

'कथाश्रवणम् अपि कश्चन अभ्यासः एव। कथाश्रवणतः जीवनमार्गः परिष्कृतः स्यात्' इति चिन्तयन् इव त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं सः यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– ''राजन्! निद्रां सुखं सन्तोषं च विहाय भवान् यत् कार्यं करोति तत् दृष्ट्वा अहं चिन्तयामि यत् भवान् महतः फलस्य प्राप्त्यर्थं प्रयत्नं कुर्वन् अस्ति इति। किन्तु, मम सन्देहः यत् भवत्तः ये उपकारं प्राप्तवन्तः ते कृतज्ञतां प्रकटयेयुः उत कृतघ्नताम्? उपकारं ये प्राप्नुवन्ति ते सर्वे कृतज्ञताम् एव प्रकटयन्ति इति न। अत्र निर्मलायाः कथा एव उदाहरणम्। अहं तां कथां विस्तरेण श्रावयामि। श्रद्धया शृणोतु तावत्'' इति।

## वेतालकथा



अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं गिरिजापुरे माधवः नाम अजपालः आसीत्। अजपालनेन एव जीवननिर्वहणं स्यात् इति परिस्थितिः तु नास्ति तस्य। यतः परम्पराप्राप्ता अल्पा सम्पत्तिः तस्य आसीत्। तथापि सः अजपालनं तु न परित्यक्तवान् अस्ति। माधवः आकारेण सुन्दरः। तस्य कण्ठस्वरः अपि उत्तमः। तस्य गृहे अन्यः कोऽपि नास्ति, ऋते मातुः। माधवः प्रतिदिनं रात्रौ भोजनं समाप्य गृहस्य पृष्ठतः मञ्चं प्रसार्य सुखेन शयानः गीतानि गायति। एतेन महान्तम् आनन्दम् अनुभवति च। किन्तु अत्र कश्चन विघ्नः अपि दृश्यते स्म। स च विघ्नः प्रतिवेशिन्याः निर्मलातः।

माधवस्य गृहस्य पार्श्वे एव गोपीनाथस्य गृहम् अस्ति। गोपीनाथः धनिकः। तस्य पत्नी पुत्रीं प्रसूय प्राणान् त्यक्तवती आसीत्। सा पुत्री एव निर्मला। निर्मला जन्मना एव पङ्गुः। पत्न्याः मरणस्य अनन्तरम् अल्पे एव काले गोपीनाथः अन्यां परिणीतवान् आसीत्। सा विमाता निर्मलायाः विषये अल्पाम् अपि प्रीतिं न प्रदर्शयति स्म। गृहकार्याणि सर्वाणि निर्मलया एव करणीयानि भवन्ति स्म। यद्यपि निर्मला पङ्गुः, तथापि सा सर्वाणि कार्याणि सम्यक् एव करोति स्म। बाल्ये कदाचित् पाककार्ये उद्युक्ता निर्मला अजागरूकतावशात् अग्नेः उपरि पतिता। अतः तस्याः शरीरं दग्धम्। मुखं तु सर्वथा विकृतं जातम्। निर्मला जन्मना एव पङ्गुः। रूपम् अपि सामान्यम्, इदानीं मुखे अपि विकारः। अतः यः तां पश्यति सः झटिति जुगुप्सां प्राप्नोति स्म।

निर्मला आदिनं कार्याणि कृत्वा श्रान्ता सती रात्रौ विलम्बेन गोष्ठस्य पार्श्वे मञ्चस्य उपरि शयनं करोति। स्वस्य दुर्गतिं स्मरन्ती सा प्रतिदिनं मन्देन शब्देन रोदनं करोति। तस्याः रोदनशब्दः अनतिदूरे एव सुप्त्वा गायतः माधवस्य अवधानस्य भङ्गं करोति स्म। तदा सन्तोषेण गातुम् अशक्तः सः गानं स्थगयति स्म।

एवम् एव दिनानि गतानि। माधवः निर्मलायाः दुरवस्थां दृष्ट्वा खेदम् अनुभवति। किन्तु तस्याः दुरवस्थायाः

निवारणार्थं सः किमपि कर्तुम् अपि न शक्नोति। तस्याः रोदनम् एकान्तताभङ्गं करोति इत्यतः सः तत् सोढुम् अपि न शक्नोति। एवं विचित्रस्थितिः माधवस्य।

कदाचित् माधवः अजान् चारयन् अरण्ये बहुदूरं गतवान्। कस्यचित् पर्वतस्य समीपे अजान् चरणार्थं परित्यज्य वृक्षस्य अधः उपविष्टवान्। स च प्रदेशः अतीवरमणीयः आसीत्। तत्रत्यां रमणीयतां दृष्टवति माधवे आनन्दतरङ्गाः उत्पन्नाः। सः भावपरवशः सन् गातुम् उद्युक्तः। नेत्रे निमील्य मधुरेण स्वरेण गायति सः। सुदीर्घकालं यावत् एवं गीतवान् सः।

यदा माधवः नेत्रे उन्मीलितवान् तदा तस्य पुरतः कश्चन संन्यासी उपविष्टः आसीत्। मुनिं दृष्ट्वा झटिति उत्थाय भक्त्या नमस्कृतवान् माधवः।

मुनिः माधवम् आशिषा अनुगृह्य मन्दहासपूर्वकम् उक्तवान्– "वत्स! केभ्यश्चित् दिनेभ्यः मम मनसः शान्तिः न आसीत्। भवतः गानस्य श्रवणात् मया मनश्शान्तिः आनन्दः च लब्धः। भवता नितराम् उपकृतः अस्मि। भवतः मनसि काऽपि अपेक्षा अस्ति चेत् वदतु। तां पूरयिष्यामि" इति।

तदा माधवः दीर्घं निश्श्वस्य उक्तवान्– "श्रीमन्! कस्यचिदपि वस्तुनः प्राप्तौ मम इच्छा नास्ति। अहम् आदिनं परिश्रमं तु



करोमि एव। रात्रौ शयने उपविश्य आतृप्ति गातव्यम् इति मम इच्छा। किन्तु एषा अपेक्षा अपि एषु दिनेषु अपूरिता एव तिष्ठति" इति।

एतत् श्रुत्वा मुनिः आश्चर्येण पृष्टवान्– "किमर्थम् एवं भवति?" इति।

तदा माधवः निर्मलायाः विषयं विस्तरेण निवेद्य– "तस्याः सगद्गदं रोदनं श्रोतुम् एव न शक्नोमि। किन्तु अनिवार्यतया प्रतिदिनं तत् श्रोतव्यम् एव भवति। एतस्य परिहारः कथम् इत्येव न ज्ञायते मया " इति उक्तवान्।

मुनिः क्षणकालस्य मौनस्य अनन्तरं माधवं पृष्टवान्– "माधव! कानिचन दिनानि यावत् सा मम आश्रमे यथा तिष्ठेत् तथा कर्तुं



शक्नुयात् वा भवान्?" इति।

"तेन किं प्रयोजनं सिध्येत्?" इति आश्चर्येण पृष्टवान् माधवः।

"तत्सर्वं कालान्तरे ज्ञायते। मम आश्रमे तस्याः स्थापनात् उपकारः एव सिध्यति, न तु अपकारः। एतम् अंशं निर्मलायाः मातापितरौ वदतु। तयोः अङ्गीकारः अस्ति चेत् तां मम आश्रमं प्रापयतु। इतः अनतिदूरे वृक्षसमूहः दृश्यते खलु? तत्र अस्ति मम आश्रमः" इति उक्त्वा ततः निर्गतवान् सः मुनिः।

माधवः अरण्यतः प्रत्यागत्य गोपीनाथस्य गृहं गतवान्। अरण्ये जातं मुनेः मेलनं, मुनेः आशयं च विस्तरेण निवेद्य– "मुनेः आश्रमं प्रति निर्मलायाः प्रेषणविषये किं वदति भवान्?" इति पृष्टवान्।

तत्समये निर्मलायाः विमाता तत्रैव आसीत्। माधवेन उक्तं सर्वं श्रुतवती आसीत् सा। 'एतेन व्याजेन वा एषा कुरूपिणी गृहात् यदि निर्गच्छेत् तर्हि वरं स्यात्' इति आलोच्य सा निर्मलाम् आहूय– "अये, स्वस्य वस्त्राणि स्वीकृत्य एतेन माधवेन प्रदर्श्यमानस्य मुनेः आश्रमं गच्छतु। मुनिसेवया कदाचित् हितं सिध्येत्" इति आज्ञास्वरेण उक्तवती।

विमातुः आदेशं शिरसा वहन्ती निर्मला अनन्तरदिने माधवम् अनुसृतवती। तौ मुनेः आश्रमं प्राप्तवन्तौ। नमस्कृतवतीं निर्मलां प्रीत्या आमृश्य उक्तवान् मुनिः– "वत्से! भवतीं पुत्रीम् इव पश्यामि। कानिचन दिनानि भवती मम आश्रमे स्थास्यति वा?" इति।

मुनेः प्रीत्या वात्स्यल्ययुक्तेन व्यवहारेण च वशीकृता अभवत् निर्मला। सा अङ्गीकारपूर्वकं शिरः चालितवती। "दशदिनानाम् अनन्तरं भवान् आगत्य मां पश्यतु" इति माधवम् उक्तवान् मुनिः। मुनेः अनुज्ञां प्राप्य गृहं प्रत्यागतवान् माधवः।

मातुः अनारोग्यस्य कारणतः, कार्यभारस्य कारणतः मासस्य अनन्तरं मुनेः आश्रमं गतवान् सः। इदानीम् मुनेः आश्रमस्य पार्श्वे एव ताडपत्रैः आच्छन्नः नूतनः कुटीरः दृष्टः माधवेन। तस्य अन्तः दशाधिकाः स्त्रीपुरुषाः दृश्यन्ते स्म। तेषु केचन वेणुभिः कण्डोलकटादीनां निर्माणं कुर्वन्ति स्म। अन्ये

केचन पाञ्चालिकादीनां निर्माणं कुर्वन्तः आसन्। किन्तु ते सर्वे विकलाङ्गाः एव।

एतत्सर्वम् आश्चर्येण पश्यन् माधवः तत्रत्यम् एकं युवकं पृष्टवान्– "मुनिवर्यः कुटीरे अस्ति वा?" इति।

तदा सः युवकः हस्तादिसङ्केतेन सूचितवान् यत् अहं मूकः बधिरः च, अतः किञ्चित् उच्चैः वदतु इति। माधवः पूर्वतनम् एव प्रश्नम् उच्चस्वरेण उक्तवान्।

तदा सः मूकः बधिरः युवकः कुटीरस्य अन्तः गत्वा मुनिं बहिः आनीतवान्।

मुनिं नमस्कृत्य आश्चर्येण पृष्टवान् माधवः– "श्रीमन्! किम् एतत्सर्वम्? भवतः तपश्चरणं प्रचलति ननु? निर्मला कुशलिनी वा?" इति।

तदा मुनिः मन्दहासं प्रकटयन्– "भवतः प्रश्नानाम् उत्तरस्य कथनात् पूर्वं मया अन्यत् किञ्चित् वक्तव्यम् अस्ति। आगच्छतु उपविशाव तावत्" इति उक्त्वा समीपस्थायाः शिलायाः उपरि उपविष्टवान्। माधवः अपि शिलायाः उपरि उपविष्टवान्।

तदा मुनिः एवम् उक्तवान्– "मम नाम जीवानन्दः इति। मया अपि बाल्ये निर्मलया इव विमातुः पीडा महती अनुभूता। कदाचित् मम विमाता तप्तायःशलाकया मम शरीरं तत्र तत्र दग्धवती। विमातुः एतादृशीं पीडां सोढुम् अशक्नुवन् अहम् अनन्तरदिने एव गृहात् निर्गत्य सर्वत्र अटन् एतत् अरण्यं प्राप्तवान्। तदा अस्मिन् कुटीरे परमानन्दः नाम मुनिः तपः आचरन् आसीत्। अहं तं





भक्त्या नमस्कृतवान्। मुनिः नेत्रे उन्मील्य मां दृष्ट्वा शरीरे दृश्यमानानां व्रणानां कारणं किम् इति पृष्टवान्। तदा अहं मम इतिवृत्तं विस्तरेण निवेदितवान्। मुनिः बहिः गत्वा मूलानि पर्णानि च आनीय निष्पीड्य प्राप्तेन रसेन मम शरीरं लिप्तवान्। अल्पे एव काले व्रणानि अपगतानि। अहं स्वस्थः जातः।

अहं मुनेः सेवां कुर्वन् अत्रैव स्थितवान्। ततः विविधानि शास्त्राणि अधीतवान्। अरण्ये स्थितानाम् औषधसस्यानां परिचयं कारयन् सः मां वैद्यशास्त्रपरिणतं कृतवान्। अन्ते मां संन्यासदीक्षया अनुगृह्य एतं कुटीरं मदधीनं कृत्वा इहलोकव्यापारं समापितवान्।

अनन्तरकाले अत्रैव निवसन् अहं तपः आचरन् आसम्। अत्रान्तरे भवतः गानं श्रुतं मया। ततः परमानन्दश्च प्राप्तः। अनन्तरं भवान् निर्मलाम् अत्र परित्यज्य गतः। अहं मम वैद्यशास्त्रज्ञानबलात् तस्याः मुखविकारं पङ्गुतां च अपनीतवान् अस्मि। कदाचित् जलम् आनेतुं नदीं गता निर्मला मूर्च्छां गतं तं मूकबधिरं युवकं दृष्टवती। करुणया तम् अत्र आनीतवती। सः वेणुकार्ये अद्वितीयः। वेणुना यत्किमपि कार्यं कर्तुम् अर्हति सः।

अनन्तरदिनेषु अन्ये केचन विकलाङ्गाः अपि अत्र आगताः। तेषां निमित्तम् अन्यः कुटीरः निर्मितः। तेषां विकलाङ्गतायाः निवारणार्थं प्रयत्नं कुर्वन् अस्मि। निर्मला तु इदानीं पूर्णरूपेण स्वस्था। इतः परं यथा इच्छा तथा कर्तुम् अर्हति सा। गृहं प्रतिगन्तुम् अपि अर्हति, अत्रैव स्थातुम् अपि अर्हति" इति।

तावता नदीतः जलम् आनीय निर्मला तत्र आगतवती। तस्याः रूपं दृष्ट्वा माधवः नितराम् आश्चर्यचकितः। तस्याः मुखे अपूर्वा कान्तिः विलसति। अङ्गवैकल्यस्य विकाररूपस्य च छाया अपि नास्ति शरीरे। तस्याः नेत्रे तृप्तिं शान्तिं च द्योतयतः।

माधवं दृष्ट्वा निर्मला झटिति घटं तत्रैव स्थापयित्वा कृतज्ञतापूर्वकं नमस्कारं कृतवती।

आश्चर्यकरम् एतत्सर्वं दृष्ट्वा किं वक्तव्यम् इत्येव न ज्ञातवान् माधवः। सः किञ्चित्कालं मौनं तत्रैव आसीत्। अनन्तरं

मुनेः अनुज्ञां प्राप्य मौनं गृहं प्रतिगतवान् सः।

तस्मिन् दिने रात्रौ माधवस्य नेत्रयोः पुरतः निर्मलायाः एव चित्रम्! अनन्तरदिने प्रातः एव सः जीवानन्दमुनेः समीपं गत्वा निवेदितवान्– "श्रीमन्! आरात्रि मया निर्मलायाः विषये एव सगाम्भीर्यं चिन्तनं कृतम्। यदि सा गृहं प्रतिप्रेष्येत तर्हि तया पुनरपि तत्र दासीस्थानं प्राप्येत। अङ्गवैकल्यादिरहिता तरुणी आजीवनम् अरण्ये कुटीरे निवसेत् इति चिन्तनम् अपि अनुचितं स्यात्। अतः तां परिणेतुं निश्चितवान् अस्मि। भवतः अनुमतिः यदि स्यात् तर्हि ताम् अहं परिणीय मम गृहं नेष्यामि" इति।

तदा जीवानन्दः– "अनुमतिदानार्थम् अहं कः? निर्मला यदि अङ्गीकारं प्रदर्शयेत् तर्हि एवं भवितुम् अर्हति। विवाहः ममापि सन्तोषाय एव" इति उक्त्वा कुटीरस्य अन्तः गतवान्। निर्मलया सह वार्तालापं समाप्य बहिः आगतः सः पुनः उक्तवान्– "माधव! निर्मला भवन्तं परिणेतुं न इच्छति। एतं विचारं सा विनयेन भवन्तं निवेदितवती अस्ति। भवता अद्य मूकः बधिरश्च कश्चन युवकः दृष्टः खलु? तम् एव परिणेष्यति सा" इति।

अनन्तरं पत्रेण आच्छाद्य आनीतं वेणुम् एकं माधवाय यच्छन्– "सः युवकः निर्मला च भवते एतं वेणुं प्रीत्या अर्पयतः। एषः वेणुः तेन युवकेन स्वयं निर्मितः" इति उक्तवान्।

निराशः माधवः प्रतिवचनं किमपि वक्तुम्



अनिच्छन् वेणुं स्वीकृत्य मौनं ततः प्रतिगतवान्।

एवं कथां समाप्य वेतालः पुनः अवदत्– "राजन्! निर्मलायाः व्यवहारः किम् उचितः आसीत्? तया कृतघ्नता न प्रदर्शिता किम्? बहुधा उपकृतवतः माधवस्य परिणयं किमर्थं निराकृतवती सा? मूकं बधिरं च तं युवकं किमर्थं परिणीतवती? एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "निर्मला कृतघ्नतां प्रदर्शितवती इति न भावयामि अहम्। माधवः सदापि स्वहितं केवलं चिन्तयन् आसीत्। सः तां जीवानन्दस्य आश्रमं प्रापितवान् यत् तत्र कारणं स्वस्य आनन्दानुभवः बाध्यमानः अस्ति इत्येव, न तु निर्मलाविषयकः अनुकम्पः। एवं स्वार्थस्य निमित्तम् एव तेन सा जीवानन्दस्य आश्रमं नीता। दशसु दिनेषु तेन मुनेः आश्रमः गन्तव्यः आसीत्। किन्तु एतस्मिन् विषये तस्य सर्वथा निरासक्तिः। अतः एव मासस्य अनन्तरं सः गतवान्। किन्तु यदा निर्मला रूपवती जाता तदा तस्याः विषये एतस्य विशेषासक्तिः। एतादृशं स्वार्थैकचिन्तकं माधवं विवेकिनी निर्मला परिणेतुं न इष्टवती चेत् अत्र किम् आश्चर्यम्? किन्तु कृतज्ञतां तु सूचितवती एव। अतः एव कृतज्ञतासूचकः वेणुः उपायनरूपेण अर्पितः तया। विकलाङ्गानां सेवा एव तस्याः जीवनलक्ष्यम् अभवत् इति तर्कयितुं शक्नुमः वयम्। सेवया चिकित्सया च तस्य युवकस्य अङ्गवैकल्यं निवारयितुं शक्यते इति तस्याः दृढः विश्वासः आसीत् इति भाति। अतः तं परिणेतुं निश्चितवती सा। एवं समाजोद्धारकार्ये सा आत्मानं नियोजितवती" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# महात्मभिः दृष्टं भारतम्

## आदर्शज्योतिः

भारतं स्वतन्त्रं कर्तुं बहवः देशभक्ताः प्राणान् अर्पितवन्तः। १९१४ तमे वर्षे केचन युवकाः सम्भूय 'गदर पार्टी' नामकं दलं सङ्घटितवन्तः। केनडादेशे जर्मनीदेशे च तैः स्वकार्यालयः प्रतिष्ठापितः। प्रथमजागतिकयुद्धसन्दर्भे ते भारतीयं सैन्यं विद्रोहकार्ये प्रेरयितुं प्रयत्नं कृतवन्तः। किन्तु तेषां स च प्रयत्नः सफलः न जातः। एतस्य परिणामतः तेषु द्विचत्वारिंशत् जनाः मरणदण्डनं प्राप्तवन्तः। ११४ जनाः देशबहिष्कारदण्डनं प्राप्तवन्तः। त्रिनवतिः जनाः सश्रमकारागारवासेन दण्डिताः अभवन्।

यैः मरणदण्डनं प्राप्तं ते मन्दहासपूर्वकं भारतमातुः यशोगानं गायन्तः दण्डनवेदिकाम् आरूढवन्तः। प्राणत्यागात् पूर्वं ते सर्वे एवं प्रार्थनां कृतवन्तः— "जननि, भारतमातः! भवत्याः बन्धनस्य अपनयने वयम् असफलाः जाताः। अस्मासु यदि कश्चित् सजीवं तिष्ठेत् तर्हि सः भवत्याः कीर्तिं गौरवं च रक्षितुं, देशस्य स्वातन्त्र्यं सम्पादयितुं, जनेषु समतां शान्तिं च उपस्थापयितुं च प्रयत्नं करिष्यति" इति।

## भवन्तः जानन्ति वा?

१. तच्च राज्यं किं, यस्य च राजधानी अयोध्या आसीत्?
२. रामवंशस्य स्थापकः कः?
३. विजयनगरस्थापकयोः सहोदरयोः नाम किम्?
४. विजनगरराज्यस्य स्थापनं कदा अभवत्? तस्य च राजधानी का आसीत्?
५. विजयनगरराज्यस्य पालकेषु सुप्रसिद्धः कः?

(उत्तराणि ३६तमे पृष्ठे)

# शिवः

शिवः शिवः शिवः शिवः शिवः शिवः शिवः शिवः शिवः शिवः शिवः
शिवः शिवः शिवः शिवः शिवः शिवः शिवः शिवः शिवः शिवः शिवः
शिवः शिवः शिवः शिवः शिवः शिवः शिवः शिवः शिवः शिवः शिवः
शिवः शिवः शिवः शिवः शिवः शिवः शिवः शिवः शिवः शिवः शिवः

जन्तूनां कष्टानाम् अपहर्ता हरः लयकारकः इत कथ्यते। ब्रह्मा सृष्टिकर्ता इति प्रसिद्धः, विष्णुश्च स्थितिकारकः इति। त्रिमूर्तिषु अन्यतमः हरः तु संहारकार्यं निर्वहति। यद्यपि सः हर्ता हरः तथापि सः मङ्गलकर्ता शिवः अपि। हर्ता हरः अस्तीत्यतः एव नूतनसृष्टेः अवकाशः। अतः परिवर्तनस्य हेतुः हरः। नटराजे वयं शिवस्य दिव्यशक्तेः दर्शनं प्राप्नुमः। नटराजनृत्यं कालगमनं सङ्केतयति। अतः एव भगवान् परमेश्वरः 'महाकालः' इत्यपि कथ्यते।

शिवस्य विषये बह्व्यः पुराणकथाः श्रूयन्ते। अकिञ्चनः सन् अपि सः जगदीश्वरः। भस्ममात्रं तस्य ऐश्वर्यं चेदपि सकलभक्ताभीष्टप्रदाता सः। एवं शिवस्य अपूर्वं वैशिष्ट्यम्। शम्भुः, शङ्करः, शिवः, रुद्रः, महादेवः, शूली इत्यादीनि तस्य नामान्तराणि।

माता दुर्गा शिवस्य अर्धाङ्गिनी। शिवस्य वामार्धं सती सा शिवेन अभिन्ना। सतीदेवी, उमा, पार्वती इत्यादिभिः नामभिः सा स्तूयते।

लिङ्गशब्दस्य अर्थः भवति चिह्नम् इति। परिपूर्णताद्योतनार्थं शिवस्य लिङ्गाकारत्वम् आगतम्। इदानीम् अपि लिङ्गरूपस्यैव शिवस्य पूजा प्रचलति लोके।

## परिसरमालिन्यस्य हेतवः धनिकाः

प्राकृतिकसम्पत्तेः उपयोगः लोके लक्षाधीशैः कोट्यधीशैः च अधिकतया क्रियते। एवम् उपयोगाधिक्यकारणतः बह्व्यः परिसरसम्बन्धिन्यः समस्याः उद्भूताः दृश्यन्ते। 'वर्ल्ड् वाच्' नामिकया पत्रिकया एषः अंशः प्रकाशितः अस्ति।

इन्धनयानचालनं, मांसाहारः, उपभोक्तृभिः क्षिप्यमाणानि बहुविधानि वस्तूनि इत्यादीनां कारणतः अपायकारिणां वायूनाम् उत्पत्तिः भवति। एतैः च वायुभिः परिसरः कलुषितः भवति। पूर्वोक्तैः हेतुभिः एव प्रायः ९०% क्लोरोफ्लोरोकार्बन्वायोः उत्पत्तिः भवति। एतस्य कारणतः भूमण्डलस्य रक्षाकवचभूतः ओझोन्वायुस्तरः क्रमशः नाशं प्राप्नोति।



र स

र्ता:



## मेधावी बालकः

दक्षिणलण्डन्प्रदेशस्य विम्बेल्डन् इत्यत्र निवसन् गणेश सित्तम्पालम् (११ वर्षीयः) सर्रे विश्वविद्यालये गणितसप्ताहे अध्ययनार्थम् अवकाशं प्राप्तवान् अस्ति। द्विगुणितवयस्कैः अन्यैः विद्यार्थिभिः सह उपविश्य पठन् गणेशः यद्यपि सामान्यः इव एव दृश्यते, किन्तु गणिते तस्य आसक्तिः तु अनूह्या एव। तस्य अध्यापकः वदति यत् गणेशस्य मातापितरौ अपि गणितज्ञौ इति।

# सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. स च लेखकः कः, यस्य शूलारोपणं विहितम् आसीत्, तस्य च दण्डनस्य कार्यान्वयनात् पूर्वं सः दण्डात् मुक्तः जातः?

२. तेन लेखकेन लिखिताः प्रमुखाः ग्रन्थाः के?

३. शेक्स्पीयर्वर्येण लिखितानां रूपकाणां सङ्ग्रहः सर्वप्रथमं कदा प्रकाशितः?

४. सः प्रसिद्धः लेखकः कः, यश्च उक्तवान् यत् मम वासस्थानस्य एतस्य नगरस्य नाम परिवर्तनीयं, तत्र च मम नाम योजनीयम् इति?

५. सः सुप्रसिद्धः भारतीयः चलनचित्रनिर्देशकः कः, यश्च स्वमातृभाषया बालानां निमित्तं कथाः लिखितवान् आसीत्?

## उत्तराणि

### सामान्यज्ञानम्

१. कोसलदेशः।

२. इक्ष्वाकः।

३. हरिहररायः बुक्करायः च।

४. १३३६तमे संवत्सरे। हम्पीनगरम्।

५. कृष्णदेवरायः।

### साहित्यज्ञानम्

१. फियोडर् दोस्तावस्की। (१८२१-१८८१)।

२. 'ब्रदर्स् कार्माजोव्', 'क्रैम् एण्ड् फनिश्मेण्ट्', 'इन्सल्टेड् एण्ड् इन्जर्ड्' इत्यादयः।

३. १६२३ तमे वर्षे।

४. विक्टर् ह्यूगो।

५. सत्यजित रे।



प्रपञ्चपुराणगाथावली–२

# डेरियस्

फारसदेशीयः युवराजः स्मेरडिस् कैश्चित् क्रूरैः रहसि मारितः। युवराजस्य अनुयायिषु अन्यतमेन केनचित् युवकेन एतत् रहस्यं ज्ञातम्। सः चिन्तितवान् यत् कुतो वा मया एव आत्मानं युवराजं कथयता, सन्दर्भस्य लाभः न स्वीकरणीयः? इति।

सः वञ्चकः युवराजस्य वेषं धृत्वा राजप्रासादं प्रविष्टवान्। आकारसाम्यात् केनापि सन्देहः न प्राप्तः। सर्वे तम् आदरेण एव पश्यन्ति स्म। अल्पे एव काले सः एव सिंहासनम् आरूढवान्। राजा सन् शासनव्यवहारं निरूढवान् च।





किन्तु कथञ्चित् एषा वञ्चना सप्तभिः युवकैः ज्ञाता। ते एतद्विषये जनान् बोधयन्तः राजानं विरुध्य व्यवहरन्तः विद्रोहम् आचरितवन्तः। तं सिंहासनात् अवतारितवन्तः, शूलारोपणेन तं दण्डितवन्तः च।



राजद्रोहिणः वञ्चकस्य मरणात् जनाः नितरां सन्तुष्टाः। ते उत्सवम् आचरितवन्तः। वञ्चनायाः प्रकटनं यैः कृतं ते सप्त अपि युवकाः सच्चारित्र्यवन्तः आसन्। अतः जनाः तान् उक्तवन्तः यत् भवत्सु कश्चित् सिंहासनस्य आरोहणं करोतु, तस्य राजत्वं वयम् अङ्गीकरिष्यामः इति।

"राजा कः भवेत्?" इति विषये ते सप्त जनाः परस्परं विचारविनिमयं कृतवन्तः। अन्ते तैः निर्णीतं– "श्वः सप्तभिः अपि अश्वम् आरुह्य निर्गन्तव्यम्। एवं गमनसमये यस्य अश्वः प्रथमं हेषारवं करोति, सः राजा भवेत्" इति।





तेषु सप्तसु डेरियस्नामकः युवकः अपि अन्यतमः। डेरियसः वीरः साहसी च। तस्य परिचारकः बुद्धिमान् आसीत्। तेन कश्चन उपायः चिन्तितः। पूर्वदिने सायम् एव सः डेरियसस्य अश्वं स्वीकृत्य ततः निर्गतवान्।

सः परिचारकः अश्वं किञ्चिद्दूरं नीत्वा खर्जूरवृक्षस्य अधः अश्वेन समीचीनानि तृणानि सम्यक् खादितवान्। अश्वः महता सन्तोषेण तृणानि अखादत्। एवं तृप्तम् अश्वम् आनीय अश्वशालायां बद्धवान् सः परिचारकः।





अनन्तरदिने ते सप्त युवकाः स्वस्य अश्वम् आरुह्य प्रयाणम् आरब्धवन्तः। तृणमये प्रदेशे तेषां प्रयाणम् अनुवृत्तम्। सूर्योदयः अपि जातः। सप्त जनाः अपि गाम्भीर्येण अग्रे गच्छन्तः सन्ति।

डेरियसस्य अश्वः तस्य खर्जूरवृक्षस्य समीपम् आगच्छत्, यस्य च अधः गतदिने आकण्ठं तृणानि खादितानि आसन्। तेन पूर्वतनदिनस्य सन्तोषमयाः क्षणाः स्मृताः। सः सन्तोषेण अग्रिमपादौ उन्नीय हेषारवम् अकरोत्।





अनन्तरक्षणे अन्ये सर्वे अश्वात् अवतीर्णवन्तः। भाग्यशालिनं डेरियसम् अभिनन्दनवचनानि उक्तवन्तः च। स्वस्य परिचारकेण यत् कृतं तत् सर्वथा न जानाति डेरियसः। अतः सः चिन्तितवान्– 'सर्वं दैवाधीनम्' इति।

'डेरियसमहाराजः जयतात्' इति जयघोषेण सहैव ते षड् अश्वारोहिणः अपि डेरियसम् अनुसरन्तः राजधानीं प्रतिगतवन्तः। जनाः मार्गम् उभयतः स्थित्वा एतत् दृश्यं पश्यन्तः आसन्। नूतनस्य राज्ञः प्राप्त्या ते सर्वे नितरां सन्तुष्टाः आसन्।





एवं डेरियसः फारसराजः सन् सिंहासनम् अलङ्कृतवान्। 'श्रेष्ठः राजा' इति तेन कीर्तिः अपि प्राप्ता। परिचारकरूपेण आगतस्य भाग्यस्य एव विलासः एषः इति भावयामः वयम्। तत् यथाकथमपि वा भवतु, डेरियस्नाम इतिहासे प्रसिद्ध जातम्।



# बुद्धिमान् परमेशः

परमहंसपुरे पूर्वं नागेशः नाम कश्चन निर्धनः निवसति स्म। तस्य पत्न्याः नाम भागीरथी इति। अनयोः दम्पत्योः एकमात्रपुत्रः परमेशः।

परमेशः यदा दशवर्षीयः जातः तदा कदाचित् नागेशः विषमशीतज्वरेण पीडितः सन् प्राणान् अत्यजत्। ततः दशसु एव दिनेषु पतिवियोगतप्ता भागीरथी अपि दिवं गता। एवं परमेशः अनाथः जातः।

ग्रामीणाः दयया प्रतिदिनं तं स्वस्य गृहं नीत्वा भोजयन्ति। एवम् आत्मीयेषु गृहेषु भोजनं कुर्वन् प्रवृद्धः सः। तस्य शरीरसामर्थ्यं यदा आगतं तदा ग्रामीणाः तद्द्वारा कार्यं कारितवन्तः। यः कोऽपि यत्किमपि कार्यं वदति चेदपि परमेशः न शक्यते इति न वदति। किन्तु कार्यस्य प्रतिफलरूपेण धनादिकं किमपि न प्राप्नोति सः। यस्य गृहस्य कार्यं क्रियते तस्मिन् गृहे तद्दिनस्य भोजनं प्राप्नोति सः, तावदेव।

कदाचित् शेषाद्रिः नाम कृषिकः परमेशं स्वगृहम् आहूय उक्तवान्– "भोः, इतोऽपि कति दिनानि भवान् एवं जीवति? प्रतिफलं विना कार्यं करोति चेत् भवतः भाविजीवनस्य का गतिः स्यात्? अतः भवान् मम गृहे एव तिष्ठन् मद्गृहस्य कार्याणि करोतु। विरामसमये किञ्चित् विद्याभ्यासम् अपि करोतु। भाविनि काले विद्या भवतः जीवनस्य आधारः भवितुम् अर्हति" इति।

परमेशः एतत् अङ्गीकृत्य शेषाद्रेः गृहे वासम् आरब्धवान्। इदानीम् आहूतानां सर्वेषां गृहे कार्यं न करोति सः।

एवम् एव मासाः अतीताः। गुरुराजः नाम कृषिकः कदाचित् परमेशेन एकान्ते मिलित्वा उक्तवान्– "भोः, भवान् तु वञ्चनाम्

अजानन् सत्पुरुषः। श्रद्धया कार्याणि करोति। एतादृशाय भवते कार्यस्य प्रतिफलरूपेण शेषाद्रिः किं ददाति? प्रतिदिनं केवलं भोजनद्वयं,तावदेव। अतः भवान् मम गृहस्य कार्यं करोतु। भवते प्रतिमासं त्रिंशत् रूप्यकाणि दास्यामि" इति।

परमेशः एतत् सन्तोषेण अङ्गीकृतवान्। शेषाद्रेः गृहं परित्यज्य गुरुराजस्य गृहे कार्यं कर्तुम् आरब्धवान् च। एतेन शेषाद्रिः नितरां कुपितः। सः गुरुराजस्य गृहम् आगत्य सम्यक् भर्त्सयित्वा गतवान्।

एतेन गुरुराजस्य खेदः जातः। सः ग्रामीणानां पुरतः– "पश्यन्तु भोः, भवन्तः। शेषाद्रिः परमेशद्वारा कार्यं कारयन् प्रतिफलं किमपि न ददाति स्म। अहं तु परमेशं प्रीत्या पश्यन् प्रतिमासं त्रिंशत् रूप्यकाणि वेतनरूपेण यच्छन् अस्मि। परमेशस्य हितार्थम् एव मया एतत् कृतम्। किन्तु शेषाद्रिः तु मयि दोषम् आरोपयति। किम् एतत् उचितम्?" इति उक्तवान्।

तदा तत्र उपस्थितेषु केचन शेषाद्रेः पक्षं समर्थितवन्तः। अन्ये केचन गुरुराजेन यत् कृतं तत् एव उचितम् इति उक्तवन्तः। ग्रामे दिनद्वयं यावत् एषः एव चर्चाविषयः आसीत्।

ग्रामे प्रचलन्तीम् एतां चर्चां समापयितुम् इच्छन् ग्रामप्रमुखः चर्चासक्तान् जनान् मेलयित्वा उक्तवान्– "कस्यचित् अनाथस्य बालकस्य निमित्तं भवन्तः एवं चर्चां किमर्थं कुर्वन्ति? यत्र अधिकं प्रतिफलं लभ्यते तत्र वासेच्छा सहजा। अतः तदनुगुणं सः करोति



चेत् भवतां किमर्थम् असमाधानम्? यथा इच्छा तथा करोतु सः" इति।

"आम् आम्। यथा इच्छा तथा कर्तुं तस्य अधिकारः अस्ति एव" इति वदन्तः ग्रामीणाः ततः निर्गतवन्तः।

अनन्तरदिने भूषणः नाम धनिकः सेवकद्वारा परमेशं स्वगृहम् आनायितवान्। 'प्रतिमासं भवते अन्नवस्त्रादिकम् अविहाय पञ्चाशत् रूप्यकाणि दीयन्ते। सङ्क्रान्तिपर्वसमये नूतनं वस्त्रम् अपि दीयते' इति उक्त्वा परमेशम् अङ्गीकारयित्वा स्वगृहस्य कार्ये योजितवान्।

एतां वार्तां श्रुत्वा क्रुद्धः गुरुराजः ग्रामीणानां पुरतः– "पश्यन्तु भवन्तः। सः भूषणः आत्मानं धनिकं मन्यमानः गर्वेण व्यवहरति। मम गृहे कार्यं कुर्वन्तं परमेशं, धनलोभप्रदर्शनपूर्वकं वञ्चयित्वा स्वगृहस्य कार्ये नियोजितवान्। किम् एतत् उचितम्? केनापि एतादृशम् अन्याय्यं न करणीयम्" इति उक्तवान्।

गुरुराजः यदा एवं कथयन् आसीत् तदा शेषाद्रिः तत्रैव आसीत्। सः गुरुराजम् उक्तवान्– "भोः, भूषणेन कृतम् अनुचितम् इति वदति खलु भवान्? एवं वदता भवता पूर्वं किं कृतम् आसीत्? मद्गृहे कार्यं कुर्वन्तं परमेशं भवान् अपि आकृष्टवान् एव। भवता यथा कृतं तथैव कृतं भूषणेन" इति।

एतत् श्रुतवतः गुरुराजस्य कोपः प्रवृद्धः। सः कोपकारणतः शेषाद्रिं ताडयितुम् उद्युक्तः। तयोः परस्परं निन्दनं कलहश्च



आरब्धम्। तदा तत्र सम्मिलिताः कलहं निवार्य तयोः सान्त्वनं कृतवन्तः।

'मत्कारणतः एव ग्रामे इदानीं कलहादिकम् आरब्धम्' इति जानन् परमेशः रात्रौ एकं पत्रं ग्रामप्रमुखस्य गृहे पातयित्वा ततः कुत्रापि निर्गतवान्।

प्रातः ग्रामप्रमुखः तत् पत्रं पठितवान्। अनन्तरं शेषाद्रि-गुरुराज-भूषणादीन् मेलयित्वा उक्तवान्– "सर्वे सम्मिलिताः खलु? ह्यः रात्रौ वातायनद्वारा मम गृहे एकं पत्रं पातयित्वा परमेशः अस्मद्ग्रामं परित्यज्य निर्गतः अस्ति। तेन पत्रे यः विषयः लिखितः स च चिन्तनयोग्यः अस्ति" इति।

अनन्तरं तेन पत्रं पठितम्– "ग्रामीणेभ्यः सर्वेभ्यः मम नमस्काराः। मातापित्रोः वियोगात् निर्गतिकतां प्राप्तवन्तं मां भवन्तः सर्वे प्रीत्या दृष्टवन्तः। आहारादिदानेन मां पोषितवन्तः च। अतः अहं नितरां कृतज्ञः अस्मि।

इदानीं मम समीपे किञ्चित् धनम् अस्ति। शरीरबलं बुद्धिबलं च अस्ति एव। अतः कुत्रापि केनापि प्रकारेण जीवितुं शक्नोमि इति विश्वासः अस्ति मयि। एषु दिनेषु मन्निमित्तं ग्रामे वैमनस्यं प्रसृतं दृश्यते। परिस्थितिः एवम् एव अनुवर्तते चेत् ताडनमारणादिकम् अपि प्रचलेत् इति भाति मम। यस्मात् ग्रामात् अहम् उपकृतः तत्र मत्कारणतः वैमनस्यं न प्रचलेत्। अतः एव एतं ग्रामं परित्यज्य गच्छन् अस्मि" इति।

पत्रपठनस्य अनन्तरं ग्रामप्रमुखः मौनम् उपविष्टवतां सर्वेषां मुखानि सकृत् दृष्ट्वा उक्तवान्– "वयं सर्वे आत्मानं बुद्धिमन्तं भावयामः। परमेशं च निरक्षरं भावयामः। इदानीं तु तद्विपरीतं प्रवृत्तम्। वयम् अविवेकेन व्यवहृतवन्तः। परमेशः च विवेकेन व्यवहरन् अस्मान् नीतिं बोधितवान्। सः एव वास्तविकः बुद्धिमान्" इति।

ग्रामीणाः ग्रामप्रमुखस्य वचनं सत्यम् इति अङ्गीकुर्वन्तः लज्जया शिरः अवनमय्य मौनं ततः निर्गतवन्तः।






मन्त्रिषु अन्यतमस्य हनूमतः तीक्ष्णमतित्वं, व्यवहारचातुर्यं, निर्णयक्षमतां च जानन् सुग्रीवः तम् एवम् उक्तवान्– "आञ्जनेय! सर्वासु दिक्षु यद्यपि मया दूताः प्रेषिताः, तथापि भवति मम विशेषदृष्टिः अस्ति। सीतान्वेषणकार्यं भवान् एव सम्पादयितुम् अर्हः इति मम विश्वासः। दक्षिणदिशि लङ्का अस्ति इति श्रूयते। अतः भवन्तं तस्यां दिशि एव प्रेषयन् अस्मि। सीता रावणेन लङ्कायां स्थापिता स्यात्, अन्यत्र वा गोपिता स्यात्। अतः प्रत्यङ्गुलम् अन्वेष्टव्यं भवता। सङ्कल्पितस्य कार्यस्य समापनं विना भवान् न विश्राम्यति इति अहं जानामि। भवान् सूक्ष्मरूपेण, स्थूलरूपेण, आकाशमार्गेण जलमार्गेण चापि गन्तुं समर्थः। भवता गन्तुम् अशक्यं स्थलं भूमौ, आकाशे, समुद्रे वा नास्ति। एतादृशः समर्थः भवान् एव सीतादेव्याः वार्ताम् आनेष्यति इति वदति मम अन्तरङ्गम्। रामलक्ष्मणयोः सख्यस्य हेतुः भवान् एव। सीताप्राप्तेः हेतुः अपि भवान् एव भवतु" इति।

सुग्रीवस्य कथनं पार्श्वस्थः रामः अपि श्रुतवान्। आकारदर्शनेन एव हनूमतः सामर्थ्यातिशयः ऊहितः आसीत् रामेण। सुग्रीवस्य कथनस्य श्रवणस्य अनन्तरं तु तदीयसामर्थ्यातिशयविषये सन्देहः एव न अवशिष्टः।

'मम आशाकेन्द्रम् आञ्जनेयः एव' इति भावयन् रामः आञ्जनेयं स्वसमीपम् आहूय उक्तवान्– "आञ्जनेय! एतत्

७. स्वयम्प्रभामेलनम्।



मुद्राङ्गुलीयकं भवतः समीपे भवतु। सीतान्वेषणं भवान् एव करिष्यति इति मम प्रबलः विश्वासः। अतः एव एतत् अङ्गुलीयकं भवते एव यच्छन् अस्मि। अङ्गुलीयकस्य दर्शनात् तु सीता भवन्तं मत्पक्षीयं ज्ञातुं शक्नुयात्। अन्यथा वानररूपं दृष्ट्वा सा भीता भवेत्'' इति। अनन्तरम् स्वस्य अङ्गुल्या धृतम् अङ्गुलीयकं हनूमतः हस्ते स्थापितवान् रामः।

हनूमान् तत् अङ्गुलीयकं भक्त्या विनयेन च स्वीकृत्य रामं साष्टाङ्गं नमस्कृत्य रामसुग्रीवादीनाम् अनुज्ञां प्राप्य ततः निर्गतवान्।

रामः कानिचन पदानि यावत् हनूमन्तम् अनुसरन् पुनः उक्तवान्– ''आञ्जनेय! सीता कुत्र अस्ति इति ज्ञात्वा अविलम्बेन मां निवेदयन् मम कर्णानन्दं जनयतु। भवतः प्रत्यागमनं निरीक्षमाणः अहं दिनानि यापयिष्यामि। अङ्गुलीयकरक्षणविषये जागरूकता भवतु'' इति।

''आर्य! सीतान्वेषणकार्यं मदीयं मत्वा श्रद्धया कार्यप्रवृत्तः भवामि। दैवानुग्रहः यदि स्यात् तर्हि कार्यं निर्विघ्नं सिध्येत् एव। भवान् निश्चिन्तः तिष्ठतु। कार्यम् अहं सम्पादयिष्यामि'' इति रामम् उक्तवान् आञ्जनेयः।

वानराः सर्वासु दिक्षु प्रसृताः सन्ति। एवं गताः कदा प्रत्यागच्छेयुः इति निरीक्षां कुर्वन्तौ रामलक्ष्मणौ प्रस्रवणगिरेः गुहायां वसन्तौ कष्टेन दिनानि यापयतः।

'मया य क्रमः अनुष्ठितः तेन रामः तृप्तः जातः' इति जानन् सुग्रीवः अपि तृप्तः सन् पूर्ववत् भोगजीवने आसक्तः अभवत्।

सुग्रीवेण प्रेषिताः वानराः श्रद्धया सीतान्वेषणं कृतवन्तः। नदीषु, सरोवरेषु, खातेषु, गुहासु, गुल्मेषु, तरुकोटरेषु, वल्मीकेषु च ते अन्वेषणं कृतवन्तः। कोऽपि अभिमुखम् आगतः चेत् तं पृष्टवन्तः– 'सीतादेव्याः वार्ता काऽपि ज्ञायते वा?' इति। दिने विविधेषु स्थलेषु अन्वेषणं कुर्वन्तः ते रात्रौ एकत्र मिलिताः सन्तः समालोचनं कुर्वन्ति। अनन्तरं अनन्तरदिनस्य कार्यमार्गं निश्चित्य निद्रां कुर्वन्ति।

केषाञ्चन दिनानाम् अनन्तरं दिशासु अन्वेषणं कृत्वा सीतायाः वार्ताम् अप्राप्य पूर्व-पश्चिमोत्तरदिशासु गताः वानराः निराशया प्रत्यागताः।

यदा ते प्रस्रवणगिरिं प्रत्यागतवन्तः तदा सुग्रीवः तत्रैव आसीत्। विविधदिग्भ्यः समागतानां वानराणाम् अन्वेषणप्रयत्नः विस्तरेण श्रुतः तेन।

तिसृषु दिशासु गताः सीतावार्तां विनैव प्रत्यागताः इत्यतः राम-सुग्रीवादीनां निराशा न जाता। यतः दक्षिणदिशि गताः हनूमदादयः सन्तोषकरीं वार्ताम् आनयेयुः इति निरीक्षन्ते ते। दक्षिणेतरदिशासु गमनं व्यर्थं जातम् इत्यपि न। तासु दिशासु सीता न दृष्टा इत्यतः सा दक्षिणदिशि एव अस्ति इत्यंशः दृढतरः जातः।

दक्षिणदिशि गताः हनूमदादयः विन्ध्यपर्वतप्रदेशं प्राप्तवन्तः। स च कश्चन सुविशालः प्रदेशः। अनेकानि पर्वतशिखराणि असङ्ख्याः गुहाः, अनेकानि वनानि च तत्र आसन्। दुस्तरणीयाः नद्यः तत्र प्रवहन्ति स्म।

फल-कन्द-मूलादीनि खादन्तः वानराः तस्मिन् प्रदेशे प्रत्यङ्गुलम् अन्वेषणं कृतवन्तः। अन्वेषणं कुर्वन्तः एव अग्रे गतवन्तः ते। अतः तेषां मन्दः वेगः।

एवं गच्छद्भिः तैः कश्चन विचित्रः प्रदेशः दृष्टः। स च निर्जनः आसीत्। उन्नताः वृक्षाः दृश्यन्ते स्म, किन्तु ते सर्वे शुष्काः।



नदीपात्राणि दृश्यन्ते, किन्तु जलरहितानि। लताः च पत्रफलशून्याः आसन्। भूमिः अपि शुष्का आसीत्। पक्षिणः, पशवः, कृमिकीटाः वा तत्र न दृश्यन्ते स्म। एतं प्रदेशं ते आश्चर्येण कुतूहलेन च दृष्टवन्तः।

एतस्य प्रदेशस्य विषये सुग्रीवेण पूर्वं कदाचित् उक्ता कथा तैः स्मृता।

पूर्वं कश्चन मुनिः अत्र तपः आचरति स्म। तस्य तपोबलं यावत् अस्ति तावत् एव कोपः अपि आसीत्। कदाचित् षोडशवर्षीयः तदीयः पुत्रः अकालमृत्युं प्राप्तवान्। एतेन क्रुद्धः मुनिः तं प्रदेशं स्वशापेन शून्यीकृत्य कुत्रापि गतवान्। तदारभ्य एतस्य प्रदेशस्य एषा दुर्गतिः।

'एतस्मिन् प्रदेशे रावणः सीतां



एषः एव रावणः स्यात् इति भावयन् अङ्गदः कानिचन पदानि पृष्ठतः गत्वा झटिति उत्प्लुत्य राक्षसस्य स्कन्धे उपविष्टवान्। मुष्ट्या तस्य मूर्ध्नि बलेन ताडितवान् च। एतस्य प्रहारस्य कारणतः राक्षसस्य नेत्र-कर्ण-नासिका-मुखादिभ्यः रक्तं बहिः आगतम्। सः रक्तं वमन् अधः पतितः, तत्रैव प्राणान् अत्यजत् च।

'मृतः रावणः एव यदि स्यात् तर्हि समीपे कुत्रापि सीता अपि स्यात् एव' इति भावयन्तः ते समीपस्थां गुहां प्रविष्टवन्तः। गुहायाः अन्तः सर्वत्र अन्विष्टवन्तः। तत्र कुत्रापि सीता न दृष्टा। समीपे काचित् अन्या गुहा दृष्टा। तत्रापि ते अन्वेषणं कृतवन्तः। किन्तु कुत्रापि तैः सीता न दृष्टा। सर्वे श्रान्त्या निराशया च वृक्षस्य अधः उपविष्टवन्तः।

तदा अङ्गदः तान् उक्तवान्– "अस्माभिः एतावता अरण्येषु, पर्वतेषु, गुहासु, खातेषु, नदीषु, इतरत्र च अन्वेषणं कृतम्। किन्तु कुत्रापि सीता न दृष्टा। रावणस्य वार्ता अपि न प्राप्ता। इदानीम् अस्माभिः यः मरितः सः न रावणः, अपि तु कश्चन सामान्यः राक्षसः। एतावता रावणः कुत्र अस्ति इत्यपि न ज्ञातम् अस्माभिः। सुग्रीवस्य कठोराम् आज्ञां स्मरन्ति खलु भवन्तः? इदानीम् आलस्येन, औदासीन्येन, विश्रान्त्या वा न किमपि प्रयोजनम्। पुनः अन्वेषणं करवाम। अन्तिमश्वासपर्यन्तम् अपि प्रयत्नः करणीयः

स्थापितवान् स्यात् वा? न इति वक्तुं न शक्यते। यतः मायाविनः यत्किमपि कर्तुम् अर्हन्ति' इति भावयन्तः ते तस्मिन् प्रदेशे अपि सीतान्वेषणं कृतवन्तः।

अत्र अन्वेषणं समाप्य ते एकं घोरम् अरण्यं प्रविष्टवन्तः। तत्र कश्चन भीमकायः राक्षसः तेषाम् अभिमुखम् आगतः।

भीमकायस्य राक्षसस्य दर्शनात् वानराः क्षणकालं स्तब्धाः। क्षणाभ्यन्तरे ते कर्तव्यं स्मरन्तः शिलावृक्षादीन् स्वीकृत्य युद्धार्थं सिद्धाः जाताः।

सः राक्षसः वानरान् दृष्ट्वा गर्वेण गर्जन्– "भवतः सर्वान् एकेनैव मुष्टिप्रहारेण यमसदनं प्रेषयिष्यामि" इति वदन् मुष्टिं कृत्वा अग्रे आगतवान्।

अस्माभिः। अन्यः इतोऽपि उत्तमः मार्गः केनापि ज्ञातः चेत् सः वक्तुम् अर्हति" इति।

गन्धमादनः अपि अङ्गदस्य वचनम् एव समर्थितवान्।

तदा वानराः आलस्यं परित्यज्य, विश्रान्तिविचारम् अपि परित्यज्य सीतान्वेषणे उद्युक्ताः जाताः। तैः समीपे रजताद्रिः इव दृश्यमानः कश्चन पर्वतः दृष्टः। ते तस्य शिखरभागपर्यन्तम् अपि गत्वा अन्वेषणं कृतवन्तः। शिखरे स्थित्वा परितः दृष्टिं प्रसारितवन्तः। सीता कुत्रापि न दृश्यते। ते पुनः पर्वतमूलम् आश्रित्य विश्रान्त्यर्थम् उपविष्टवन्तः। सुग्रीवेण सूचितः अवधिः समाप्तप्रायः। इतःपरं किं करणीयम् इति न जानन्ति ते।

विन्ध्यपर्वतस्य उपत्यकाप्रदेशे अपि अन्वेषणं करणीयम् इति सङ्कल्प्य ते पुनरपि कार्यप्रवृत्ताः जाताः। प्रतिगुहम् अन्वेषणं कृतं तैः। निद्रदीनाम् अभावतः निरन्तरान्वेषणेन च सर्वे ते नितरां श्रान्ताः सन्ति। पिपासा बुभुक्षा चापि तान् बाधते। तथापि ते प्रयत्नात् विरताः न जाताः।

तैः किञ्चन बिलं दृष्टम्। बिलं लताजालेन आवृतम् आसीत्। अन्तः प्रवेशः कष्टकरः आसीत्। तावता तैः लक्षितं यत् क्रौञ्च-सारस-हंस-चक्रवाकादयः लतानाम् उपरितनभागे कथमपि अवकाशं परिकल्प्य बहिः आगच्छन्ति इति।

ते आश्चर्यम् अनुभवन्तः समीपं गत्वा परिशीलितवन्तः। पर्वतनदीनां विषये





पशुपक्षिणां व्यवहारविषये च सम्यक् जानन् हनूमान् सहचरान् पश्यन् उक्तवान्– "दृष्टं खलु, बिलमुखात् जलवासिनः विविधाः बहवः पक्षिणः निर्गच्छन्ति इति। एतस्मात् ज्ञायते यत् अन्तः जलस्य आश्रयः कोऽपि स्यात् इति। स च आश्रयः कासारः, नदी, तडागः, विशालकूपः वा भवितुम् अर्हति। विन्ध्यपर्वतप्रदेशे मयनिर्मितम् ऋक्षबिलम् अस्ति इति मया श्रुतम् आसीत्। तत् बिलम् एतत् एव स्यात्। अन्तः गत्वा जलपानेन पिपासां प्रथमं निवारयाम। यदि दैवानुग्रहः स्यात् तर्हि सीतावार्ता अपि कदाचित् ज्ञायेत" इति।

एतस्मिन् विषये सर्वे सहमतिं प्रदर्शितवन्तः। अनन्तरं सर्वे गुहाप्रवेशार्थम् उद्युक्ताः अभवन्। अन्तः घोरः अन्धकारः। अग्रे गतं चेत् कुत्र गम्यते इति कोऽपि न जानाति। तथापि ते धैर्येण अग्रे गच्छन्तः सन्ति।

अग्रे गमनेन तैः मन्दः प्रकाशः दृष्टः। क्रमशः प्रकाशः स्फुटः जातः। परमरमणीये प्रदेशे सन्ति ते इदानीम्। तालवृक्षाः, तमालवृक्षाः, काञ्चनवृक्षाः, भूर्जवृक्षाः, पुन्नागवृक्षाः अशोकवृक्षाः, सालवृक्षाः इत्यादयः महावृक्षाः तत्र विराजन्ते। वृक्षस्थाः फलपुष्पादयः अपि कान्त्या विलसन्ति। समीपे एव विशालः कासारः दृश्यते। कासारे सुवर्णवर्णानि कमलानि, सुवर्णवर्णाः मीनाः कूर्माः च दृश्यन्ते।

तत्र कानिचन विशालगृहाणि अपि आसन्। तेषां गृहाणां वातायन-छदि-द्वारादयः अपि सुवर्णमयाः। मणितोरणानि दृश्यन्ते द्वारेषु। भित्तिषु मौक्तिकरत्नादयः योजिताः दृश्यन्ते।

गृहस्य अन्तः पुरतः च मौक्तिकरत्नादिभिः अलङ्कृतानि मृदूनि आसनानि मञ्चाः च आसन्। भूमौ कोमलानि कम्बलानि प्रसारितानि आसन्। सुवर्णमयेषु रजतमयेषु च विविधेषु पात्रेषु चन्दनादीनि सुगन्धद्रव्याणि, फलानि, पुष्पाणि, मधूनि, विविधपानीयानि च आसन्। वस्तूनां सौन्दर्येण, आसनादीनां मार्दवेण, आहारेण वा ते वानराः न आकृष्टाः। ते एतानि सर्वाणि

कुतूहलेन पश्यन्तः अग्रे गतवन्तः। किन्तु किमपि न स्पृष्टवन्तः।

ततः अनतिदूरे तैः काचित् दिव्यस्त्री दृष्टा। सा मृगचर्म धृतवती आसीत्। तपसि लीना आसीत् च। तां परितः विशिष्टा कान्तिः विलसति स्म। ताम् आश्चर्येण आदरेण च दृष्टवन्तः वानराः।

धैर्यशाली हनूमान् किञ्चित् अग्रे गत्वा विनयेन– "भद्रे, का भवती? एतत् बिलं कस्य? वयं सर्वे निरन्तरकार्येण नितरां श्रान्ताः स्मः। अत्र फलादीनि जलं च लभ्येरन् इति भावयन्तः अन्तः आगतवन्तः। किन्तु अत्रत्यानि वस्तूनि दृष्ट्वा आश्चर्यचकिताः स्मः। अत्र काऽपि राक्षसमाया स्यात् वा इति सन्देहः अस्माकम्। सुवर्णमयानि गृहाणि केन निर्मितानि? कासारे सुवर्णकमलानि सुवर्णमीनाः, सुवर्णकूर्माः च कथम् आगताः? एतानि अलङ्कारसाधनानि किमर्थम्? अत्रत्यां वस्तुस्थितिम् अजानन्तः वयं दिग्भ्रान्ताः स्मः। कृपया वस्तुस्थितिं निवेदयतु" इति निवेदितवान्।

तदा सा तपस्विनी मधुरेण स्वरेण उक्तवती– "पूर्वम् अत्र मयः नाम कश्चन राक्षसः आसीत्। मायानिर्मितिकार्ये सः नितरां निपुणः। तेन एतत् सुवर्णमयं वनं निर्मितम्। सः महता तपसा ब्रह्माणं सन्तोष्य सर्वाणि सुखसाधनानि स्वायत्तीकृतवान् आसीत्। हेमानामिकया अप्सरसा सह सः अत्र सुखेन वसति स्म। कदाचित् एतद्विषये कुपितः इन्द्रः एतम् उद्दिश्य वज्रायुधं प्रयुक्तवान्। अनन्तरं



ब्रह्मा एतं प्रदेशं हेमायै दत्तवान्। मम नाम स्वयम्प्रभा इति। मेरुसावर्णेः पुत्री अहम्। हेमा मम सखी। तस्याः निमित्तम् अहम् एतं प्रदेशं रक्षन्ती अस्मि। हेमा सङ्गीते नृत्ये च समर्था। अन्यः कोऽपि मां जेतुं यथा न शक्नुयात् तथा वरः मह्यं दत्तः तया। भवन्तः किमर्थम् एतस्मिन् प्रदेशे अटन्ति? प्रवेशानर्हम् एतं प्रदेशं किमर्थं महता कष्टेन प्रविष्टवन्तः? जलं पीत्वा फलानि खादित्वा च प्रथमं श्रमम् अपनयन्तु। अनन्तरं स्ववृत्तान्तं विस्तरेण निवेदयन्तु'' इति।

अनन्तरं वानराः कन्द-मूल-फलानि यथेच्छं खादितवन्तः। आतृप्ति जलं पीतवन्तः च।

हनूमान् स्वस्य आगमनस्य कारणं विस्तरेण निवेद्य– ''अम्ब! पिपासा-बुभुक्षयोः निवारणार्थं व्यवस्थां कुर्वती भवती महत् उपकारं कृतवती। वयं नितरां कृतज्ञाः स्मः'' इति कृतज्ञतावचनानि उक्तवान्।

''भवन्तः मम समीपम् आगताः। आगतानां सत्कारः यथाशक्ति कृतः। एवं मया कर्तव्यपालनं कृतं, न अधिकं किमपि'' इति उक्तवती स्वयम्प्रभा।

''अस्माकं नायकेन सुग्रीवेण दत्तः अवधिः समाप्तः। अतः अविलम्बेन अस्माभिः प्रतिगन्तव्यम्। किन्तु बिलात् बहिः कथं गमनम् इत्येव वयं न जानीमः। बहिर्गमनं विना सीतान्वेषणकार्यं कर्तुं न शक्यम्। अतः कृपया अस्मान् अनुगृह्णातु'' इति प्रार्थितवान् हनूमान्।

''अहं मम तपःशक्त्या भवतः सर्वान् बहिः प्रापयामि। सर्वे नेत्रे निमील्य उपविशन्तु'' इति सूचितवती स्वयम्प्रभा।

वानराः सर्वे नेत्रे निमील्य मौनम् उपविष्टवन्तः। ते क्षणाभ्यन्तरे बहिः प्रापिताः स्वयंप्रभया।

तेषां पृष्ठतः उपस्थिता स्वयम्प्रभा– ''अत्र पश्यन्तु, एषः विन्ध्याचलः। पुरतः दृश्यते समुद्रः। शुभं भवतु'' इति आशिषा अनुगृह्य ततः निर्गतवती।





# उत्तमः वरः

शरभेन्द्रः कश्चन सामान्यः कृषिकः। सः परिश्रमेण कार्यं कुर्वन् अपव्ययं किमपि अकुर्वन् धनसञ्चयं कृतवान्। एवं स्वमरिश्रमेण एव सः धनिकः जातः। तस्य पुत्री राधा।

राधा सुन्दरी तरुणी। सर्वासु विद्यासु गृहकार्ये च सा निपुणा। अतः एषा परिणेतव्या इति बहूनां तरुणानाम् इच्छा। किन्तु शरभेन्द्रः वदति स्म यत् अहं मम पुत्रीं सामान्याय निर्धनाय न दास्यामि इति।

ततः समीपे स्थिते ग्रामे विजयः नाम कश्चन धनिककुलोत्पन्नः तरुणः निवसति स्म। शरभेन्द्रः वरान्वेषणं कुर्वन् अस्ति इति तेनापि श्रुतम्। अतः सः सीतारामनामकं विवाहघटकम् आहूय उक्तवान्– "मम सम्पत्तिः कियती इति भवान् जानाति एव। राधा परिणेतव्या इति मम इच्छा। यतः सा रूपवती गुणवती च। अतः भवता शरभेन्द्रसमीपे विवाहप्रस्तावः करणीयः। यदि सः लक्षं रूप्यकाणि वरदक्षिणारूपेण दातुं सिद्धः तर्हि भवान् विवाहनिश्चयं करोतु। तेन तावत् दातुं न शक्यते इति अस्ति चेत् अशीतिसहस्रं रूप्यकाणि वा ददातु सः। विवाहः निश्चीयते चेत् भवते योग्यम् उपायनं दास्यामि" इति।

अमूल्यम् उपायनं प्राप्येत इति भावयन् सीतारामः शरभेन्द्रस्य गृहं गत्वा विजयस्य गुणानां सम्पत्तेः च वर्णनं कृत्वा तस्य आशयम् अपि निवेदितवान्।

सीतारामस्य कथनं श्रुत्वा शरभेन्द्रः उक्तवान्– "निर्धनाय वराय कन्या न दीयते इति मया पूर्वम् एव उद्घोषितम्। एतत् भवान् अपि जानीयात् एव" इति।

"विजयं सामान्यं मा भावयतु भवान्।

तादृशः धनिकः समीपे कोऽपि नास्ति। लक्षरूप्यकात्मिकां वरदक्षिणां दातुं भवान् न सिद्धः चेत् तत्र न्यूनीकारयिष्यामि अहम्" इति उक्तवान् विवाहघटकः सीतारामः।

किन्तु शरभेन्द्रः स्पष्टं निराकृतवान् यत् विजयाय कन्या न दीयते इति। तदा कुपितः सीतारामः– "विजयं निर्धनं भावयति खलु भवान्? इतोऽपि उत्तमः सम्बन्धः कथं प्राप्येत भवता इति अहम् अपि पश्यामि तावत्" इति उक्त्वा ततः निर्गतवान्।

ततः अल्पे एव काले राजारामः नाम अन्यः विवाहघटकः आगतः। एषः अजितनामकेन धनिकपुत्रेण प्रेषितः आसीत्। अजितस्य सम्पत्तिः विजयस्य सम्पत्तेः अपेक्षया अधिका। अन्यच्च अजितः वरदक्षिणारूपेण पञ्चाशत्सहस्रं रूप्यकाणि केवलम् इच्छति स्म। राजारामेण उक्तं सर्वं शान्ततया श्रुतवान् शरभेन्द्रः। अन्ते सीतारामं यत् उत्तरम् उक्तवान् आसीत् तदेव उत्तरम् उक्तवान् शरभेन्द्रः।

तदा राजारामः असमाधानेन उक्तवान्– "श्रीमन्! भवान् विजयं निर्धनम् उक्तवान् इति श्रुतम्। विजयस्य यावती सम्पत्तिः ततोऽपि दशगुणिता सम्पत्तिः अस्माकम् अजितस्य। एतम् अपि भवान् निर्धनम् उक्तवान् खलु? एवं तर्हि भवतः सम्पत्तिः कियती स्यात्, येन भवान् एवं गर्वेण व्यवहरेत्? आगतान् उत्तमान् वरान् एवम् एव भवान् तिरस्करोति चेत् भवतः पुत्री अविवाहिता एव तिष्ठेत्" इति।



ततः केषाञ्चित् दिनानाम् अनन्तरं विनोदनामकः युवकः आगत्य शरभेन्द्रम् उक्तवान्– "श्रीमन्! भवतः पुत्रीं परिणेतुम् इच्छामि अहम्। भवतः पुत्री राधा अपि मां इच्छति एव। भवता अनुज्ञादानेन अहम् अनुग्रहणीयः" इति।

"विनोद! मम समीपे लक्षरूप्यकात्मकं धनम् अस्ति। सुविशाला भूमिः अस्ति। लक्षरूप्यकात्मकमूल्यकानि आभरणानि अपि सन्ति। किन्तु अत्र अल्पः भागः अपि मया पुत्र्यै न दीयते। वार्धक्ये धनम् एव आधारः खलु? मदीयं वार्धक्यजीवनं सुखमयं स्यात् इति मम इच्छा। अतः समग्रां सम्पत्तिम् अहं मदर्थम् एव रक्षामि। किन्तु मम इच्छा यत् मम पुत्री इदानीं यादृशानि सुखानि प्राप्नुवती अस्ति तादृशानि सुखानि विवाहानन्तरम् अपि प्राप्नुयात् इति। इदानीं भवान् वदतु, एतादृशं सामर्थ्यम् अस्ति वा भवतः?" इति गाम्भीर्येण पृष्टवान् शरभेन्द्रः।

तदा विनोदः उक्तवान्– "शरभेन्द्र-महोदय! चतुर्भ्यः वर्षेभ्यः पूर्वम् अहम् एतं ग्रामम् आगतवान्। चतसृणां महिषीणां साहाय्येन क्षीरविक्रयणम् आरब्धवान्। इदानीं मम समीपे दश महिष्यः सन्ति। एकरद्वयमिता समीचीना भूमिः अपि अस्ति। ऋणरूपेण धनं सङ्गृह्य सुखवासयोग्यं समीचीनं गृहम् अपि निर्मितवान् अस्मि। यदि दैवविरोधः न स्यात् तर्हि गृहनिमित्तं स्वीकृतम् ऋणम् एतस्मिन् वर्षे समाप्तं भवेत्। अतः मम गृहम् आगता भवतः पुत्री



सुखेन एव स्थातुम् अर्हति इति मम विश्वासः। यद्यपि अहं वयसा कनिष्ठः तथापि एकं विषयं ज्ञापयितुम् इच्छामि। वार्धक्ये धनम् एव आधारः इति भवान् भावयति। किन्तु धनम् अस्ति चेत् बान्धवाः गृध्राः इव भवतः मरणं प्रतीक्षमाणाः भवन्ति। प्रीतिः न भवति जीवने। अतः अहं वदामि– सत्कार्ये धन-विनियोगं करोतु इति। अनन्तरं भवान् मम गृहे तिष्ठतु। अहं भवन्तं पितरम् इव प्रीत्या पोषयिष्यामि'' इति।

विनोदस्य वचनैः शरभेन्द्रः सन्तुष्टः। ततः अल्पे एव काले राधा-विनोदयोः विवाहः सवैभवं सम्पन्नः।

एषा वार्ता विवाहघटकाभ्यां सीताराम-राजारामाभ्यां श्रुता एव। तौ कदाचित् विनोदस्य गृहम् आगत्य पृष्टवन्तौ– ''लक्षाधीशं विजयं कोट्यधीशम् अजितं च निर्धनौ उक्तवान् शरभेन्द्रः। एवं तर्हि तस्य पुत्रीं परिणीतवतः भवतः ऐश्वर्यं कियत्?'' इति।

तदा विनोदः हसन् उक्तवान्– ''अजितविजययोः प्रसङ्गः मया अपि श्रुतः। विजयः लक्षं रूप्यकाणि वरदक्षिणारूपेण पृष्टवान्। अजितश्च पञ्चाशत्सहस्रं रूप्यकाणि। वरदक्षिणास्वीकरणं पापाय। अन्यच्च लोके दाता उत्तमर्णः इति उच्यते, स्वीकर्ता च अधमर्णः इति। वरदक्षिणां स्वीकर्तुम् इच्छन्तौ अजितविजयौ अधमर्णौ जातौ। अधमर्णस्य योग्यता सदा न्यूना। अतः एव शरभेन्द्रः तौ निर्धनतुल्यौ भावयन् तौ तिरस्कृतवान्। अहं तु वरदक्षिणां न इष्टवान्। मम सामर्थ्यं सप्रमाणं निरूप्य शरभेन्द्रे विश्वासं जनितवान्। तावदेव न, 'वार्धक्ये भवन्तं प्रीत्या पोषयिष्यामि' इति शरभेन्द्राय आश्वासनम् अपि दत्तवान्। अतः एव सः मह्यं कन्यां दातुं सिद्धः जातः'' इति।

एतत् श्रुत्वा, वरदक्षिणास्वीकर्त्रोः प्रतिनिधीभूय विवाहप्रस्तावः कृतः यत् तदर्थं लज्जाम् अनुभवन्तौ राजाराम-सीतारामौ ततः निर्गतवन्तौ।





# चन्द्रहारः

दयासागरः कश्चन महाकृपणः। तस्यः प्रभूता सम्पत्तिः आसीत्। तथापि सः निर्धनः इव सामान्यं जीवनं यापयति स्म।

दयासागरस्य प्रतिवेशी गुणशेखरः। सः पत्न्यै पञ्चशतरूप्यकव्ययेन एकं चन्द्रहारं कारितवान्। गुणशेखरस्य पत्नी राधा एतं चन्द्रहारं धृत्वा समग्रे ग्रामे अटित्वा आगतवती। दयासागरस्य पत्न्यै देवक्यै अपि एतं हारं सगर्वं प्रदर्शितवती सा। प्रतिवेशिन्याः चन्द्रहारं दृष्टवत्याः देवक्याः मनःशान्तिः अपगता। सा पतिं प्रतिदिनं पीडयितुम् आरब्धवती– "मह्यम् अपि तादृशं हारं कारयतु" इति।

"अये अविवेकिनि! आभरणनिमित्तं धनव्ययः सर्वथा निष्प्रयोजकः। तावता मूल्येन वृषभद्वयं क्रेतुं शक्यम् " इति पत्नीं बोधितवान् दयासागरः। किन्तु देवकी एतत् न अङ्गीकृतवती।

"अस्माकं यावती सम्पत्तिः अस्ति तस्याः दशमः भागः अपि गुणशेखरस्य नास्ति। एतादृशान् दश चन्द्रहारान् कारयितुं भवान् यावत् कष्टम् अनुभवेत् तस्य दशगुणितं कष्टम् अनुभूतं स्यात् तेन। एकस्य चन्द्रहारस्य कारणे कः क्लेशः स्यात् भवतः?" इति उक्तवती देवकी। किन्तु अन्ते अपि तादृशः हारः तु न कारितः दयासागरेण।

चन्द्रहारेण शोभमानां मां पश्यति चेत् मम पत्युः चिन्तने परिवर्तनम् आगच्छेत् इति चिन्तयित्वा देवकी "श्वः प्रत्यर्पयिष्यामि" इति उक्त्वा राधातः हारम् आनीय धृतवती। पत्युः पुरतः गत्वा मन्दहासपूर्वकं पृष्टवती सा– "कथम् अस्ति हारः?" इति।

"हारः तु शोभते। किन्तु एषः हारः प्रतिवेशिन्याः खलु? अद्यैव प्रत्यर्पयतु। रात्रौ चोराः आगत्य एतत् चोरयेयुः चेत् महत् कष्टं सम्मुखीकरणीयं भवेत्" इति उक्तवान्

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

दयासागरः।

"अद्य बहूनि कार्याणि। श्वः प्रातः एव प्रत्यर्पयिष्यामि" इति उक्तवती देवकी।

रात्रिः अतीता। प्रातःकालः जातः। भीतिम् अनुभवन्ती देवकी पत्युः समीपम् आगत्य पृष्टवती– "रात्रौ भवान् पृष्ठभागद्वारम् उद्घाट्य एव सुप्तवान् वा?" इति।

"न खलु? चोराः तु आगत्य गताः न स्युः खलु? चन्द्रहारः प्रत्यर्पितः आसीत् उत न?" इति भीत्या पृष्टवान् दयासागरः।

"मया चन्द्रहारः पेटिकायां सुरक्षितं स्थापितः। भीतिः मास्तु भवतः" इति वदन्ती देवकी अन्तः गत्वा पेटिकाम् उद्घाटितवती। चन्द्रकारः तत्र न दृश्यते! देवकी रोदनम् आरब्धवती।

"अये मूर्खे! इदानीं पश्यतु, कीदृशी दुर्गतिः आगता इति। पञ्चशतं रूप्यकाणि व्ययीकृत्य हारं करयित्वा गुणशेखरस्य अर्पणीयं खलु? अन्यथा सः अस्माकम् उपरि चौर्यम् आरोपयेत्। एतत्सर्वं भवत्याः अविवेकस्य फलम्" इति खेदेन उक्तवान् दयासागरः।

अन्ते दयासागरः पञ्चशतं रूप्यकाणि व्ययीकृत्य अन्यं चन्द्रहारं कारितवान्। तं हारं पत्न्याः हस्ते अर्पयन् उक्तवान् सः– "इदानीम् एव गत्वा हारं प्रत्यर्प्य आगच्छतु" इति।

हारं स्वीकृत्य स्वकण्ठे धरन्ती मन्दहारसपूर्वकम् उक्तवती देवकी– "एषः चन्द्रहारः अस्मदीयः एव। तस्मिन् दिने मया चिन्तितम् आसीत्– हारः रक्तपेटिकायां स्थापितः आसीत् इति। किन्तु वस्तुतः तु हारः धूसरपेटिकायां स्थापितः आसीत्। हारं प्राप्य अनन्तरदिने अहं हारं प्रत्यर्पितवती। नूतनः हारः अस्मदीयः एव भवतु इति आलोच्य तदा भवन्तं किमपि न उक्तवती। यत् प्रवृत्तं तत् हिताय एव अभवत्। मया एकः चन्द्रहारः प्राप्तः" इति।

पत्न्याः बुद्धिमत्तां दृष्ट्वा दयासागरः चकितः हसित्वा मौनम् आश्रितवान् सः



# अन्धविश्वासः

नरसिंहपुरे प्रभाकरः नाम कश्चित् निवसति स्म। कार्यार्थं गमनसमये यदि कश्चित् क्षौति तर्हि सः गमनं स्थगयति। तस्य विश्वासः आसीत् यत् क्षुतस्य श्रवणम् अशुभकरम् इति। प्रभाकरस्य एतादृशं व्यवहारं दृष्ट्वा पिता सूर्यनारायणः वदति स्म– "वृद्धस्य ममैव 'क्षुतम् अशुभकरम्' इत्यत्र विश्वासः नास्ति। भवान् तत्र कथं विश्वसिति?" इति।

कदाचित् प्रभाकरः विशेषकार्यसय निमित्तं नगरं प्रति प्रस्थितवान्। यावत् सः गृहात् निर्गतः तावता तस्य दशवर्षीयः पुत्रः प्रकाशः क्षुतवान्।

एतत् श्रुत्वा क्रुद्धः प्रभाकरः पुत्रं तर्जितवान्– "किं रे वराक! मम निर्गमनसमये क्षुतं न करणीयम् इत्यपि न जानाति वा भवान्?" इति।

"क्षुतम् आगतं चेत् कथं निरोद्धुं शक्येत? मया क्षुतं चेत् भवता किमर्थं गमनं स्थगनीयम्?" इति पृष्टवान् प्रकाशः।

"क्षुतम् अशुभकरम्। अन्यस्य क्षुतं श्रुत्वा अपि कार्यार्थं गतं चेत् कार्यं न सेत्स्यति" इति उक्तवान् प्रभाकरः।

"यदा वयं कार्यार्थं निर्गच्छामः तदा ग्रामे कुत्रचित् कश्चित् क्षौति एव। तदा अशुभं न भविष्यति वा?" इति पृष्टवान् प्रकाशः।

तदा प्रभाकरः असमाधानेन उक्तवान्– "तत्सर्वं न गणयामः वयम्। तत्सर्वं गणयामः चेत् कार्यं कर्तुम् एव न शक्यते। अतः यत् क्षुतं श्रुतं भवति तदेव अमङ्गलं करोति इति भावनीयम्" इति।

"एवं तर्हि पितामहः एव भाग्यशाली" इति हसन् उक्तवान् प्रकाशः।

"तत् कथम्?" इति आश्चर्येण पृष्टवान् प्रभाकरः।

"पितामहस्य श्रवणशक्तिः दुर्बला। अतः सः अन्यस्य क्षुतं न शृणोति। अतः एव अशुभशङ्कां विना सः सदा कार्यरतः भवति। भवान् तु अशुभशङ्काशृङ्खलया बद्धः अस्ति। अतः करणीयानि कार्याणि कर्तुं न शक्नोति भवान् कदाचित्। अतः पितामहः एव भाग्यशाली खलु?" इति उक्तवान् प्रकाशः।

पुत्रस्य वचनस्य श्रवणेन प्रभाकरेण विवेकः प्राप्तः। तस्मात् दिनतः सः क्षुतविषयकम् अन्धविश्वासं परित्यक्तवान्।





# उत्तमः पुत्रः

प्राचीने काले चीनादेशे ह्यूयेन् नाम कश्चन धनिकः आसीत्। तस्मिन् दुर्गुणाः एव अधिकाः। यं प्रति धनिकः कोपं प्राप्नोति तस्य सर्वनाशः जातः इत्येव भावनीयम्। यः धनिकस्य कोपस्य पात्रं भवति तेन बहूनि कष्टानि सोढव्यानि भवन्ति।

तस्मिन् ग्रामे वाङ्ग् नाम कश्चन निर्धनः आसीत्। सः धैर्यशाली। ह्यूयेनेन क्रियमाणान् अव्यवहारान् द्रष्टुम् अशक्तः सः कदाचित् राजानं सर्वं निवेदितवान्। 'धनिकः निग्रहणीयः भवता' इति प्रार्थितवान् च।

किन्तु राजा वाङ्गस्य वचनम् उपेक्षया दृष्टवान्। द्वेषकारणतः वाङ्गः एवं वदन् अस्ति इति भावितवान् सः। अतः– "इतः परम् एवं मिथ्यारोपं करोति चेत् भवन्तं कारागारे स्थापयिष्यामि" इति तर्जयित्वा तं ततः प्रेषितवान् राजा।

"राजानं निवेदयता मया अनुचितम् एव कृतम्" इति चिन्तयन् वाङ्गः ततः निर्गतवान्। एवं गमनसमये मार्गे तेन कस्याश्चित् स्त्रियः करुणक्रन्दनं श्रुतम्। वाङ्गः तस्यां दिशि धावितवान्। तत्र तेन दृष्टं यत् ह्यूयेनः काञ्चित् वृद्धां निर्दयं ताडयन् अस्ति।

"चतुर्विंशतिः, पञ्चविंशतिः ...." इत्येवं गणयन् क्रोधेन कशया वृद्धां ताडयन् अस्ति ह्यूयेनः। एतत् दृष्टवतः वाङ्गस्य महान् क्रोधः आगतः। सः इतस्ततः अन्विष्य मुसलसदृशं दण्डम् उन्नीय तेन ह्यूयेनं ताडितवान्। एतस्मात् प्रहारात् ह्यूयेनः अधः पतितः। वाङ्गः पुनरपि तं ताडितवान्। एषः प्रहारः ह्यूयेनस्य उरसि पतितः। क्षणाभ्यन्तरे ह्यूयेनः गतप्राणः जातः।

द्वित्रक्षणानाम् अनन्तरं वाङ्गस्य कोपः

"चीनादेशीया जानपदकथा"

शान्तः। कोपशमनानन्तरं सः आत्मना कृतस्य अकृत्यस्य निमित्तं पश्चात्तापम् अनुभूतवान्। अतः सः पुनरपि राजसमीपं गत्वा निवेदितवान्– "प्रभो, मया ह्यूयेनः मारितः। एतदर्थम् उचितेन दण्डेन मां दण्डयितुम् अर्हति भवान्" इति।

"कञ्चन धनिकं निर्धनः भवान् विना कारणं मारितवान् वा? एवं तर्हि शूलारोपणम् एव भवदर्थं योग्यः दण्डः" इति आज्ञापितवान् राजा।

वाङ्गस्य मरणदण्डनवार्तां श्रुत्वा तन्मित्राणि केचन वृद्धाः च आगत्य राजानं निवेदितवन्तः– "प्रभो! वाङ्गः सज्जनः। मृतः ह्यूयेनः तु महादुष्टः। तेन क्रियमाणं दुराचारं दृष्ट्वा वृद्धायाः रक्षणार्थं वाङ्गेन यदा प्रयत्नः कृतः तदा अकस्मात् ह्यूयेनः मृतः। वाङ्गः एतत् बुद्ध्या न कृतवान्। अन्यच्च ह्यूयेनस्य मरणात् लोकस्य उपकारः एव जातः। अतः वाङ्गः क्षन्तव्यः" इति।

किन्तु राजा एतत् निराकृतवान्। आगताः सर्वे निराशया प्रतिगतवन्तः। तावता चतुर्दशवर्षीयः कश्चन बालकः आगत्य राजानं साष्टाङ्गं नमस्कृत्य– "प्रभो, वाङ्गं बन्धनात् मुक्तं करोतु। मम शूलारोपणं भवतु" इति निवेदितवान्।

राजा आश्चर्येण पृष्टवान्– "कः भोः भवान्?" इति।

"अहं वाङ्गस्य ज्येष्ठः पुत्रः। वयं चत्वारः सहोदराः। अहम् एतस्मात् लोकात् निर्गच्छामि चेत् अपि मम माता स्वस्य दुःखं



निग्रहीतुं शक्नुयात्। यतः अन्ये त्रयः पुत्राः तस्याः सन्ति एव। किन्तु मम पिता नास्ति चेत् वयं सर्वे निर्गतिकाः भवामः'' इति उक्तवान् सः बालकः।

एतत् श्रुत्वा आश्चर्यम् अनुभवन् राजा पृष्टवान्– ''अये, भवन्तं माता अत्र प्रेषितवती, उत भवान् स्वयम् आगतः?'' इति।

''प्रभो, मातरम् अनुक्त्वा एव अत्र आगतः अस्मि। पिता जीवति चेत् तस्याः महान् सन्तोषः स्यात् एव। मम चिरनिर्गमनात् सा किञ्चित्कालं खेदम् अनुभवेत्। किन्तु कालान्तरे सा तत् विस्मर्तुं शक्नुयात्। पिता सकुशलं प्रत्यागतः चेत् सा भवतः दयागुणं क्षमागुणं च प्रशंसेत्। मातापित्रोः सुखं भवति चेत् ममापि तृप्तिः। अतः एव अहम् अत्र आगतः'' इति उक्तवान् सः बालकः।

बालकस्य वचनं श्रुतवतः राज्ञः हृदये करुणा उत्पन्ना। ''भवतः आशयं निश्चयेन पूरयिष्यामि बालक!'' इति उक्तवान् सः।

तदा बालकः परमसन्तोषेण– ''प्रभो, अहं धन्योऽस्मि। पितुः विमोचने किमर्थं विलम्बः? अद्यैव विमोचनं भवतु तस्य। तत्स्थाने इदानीम् एव मां कारागारे स्थापयतु'' इति निवेदितवान्।

तदा राजा आनन्दाश्रूणि स्रावयन्– ''वत्स! भवतः आशयं पूरयिष्यामि इत्यस्य अर्थः– भवन्तं शूले आरोपयिष्यामि इति न। भवादृशः उत्तमः बालकः चिरं जीवेत्। भवादृशम् उत्तमं पुत्रं प्राप्तवन्तौ भवतः मातापितरौ अपि उत्तमौ स्याताम् एव। अन्यच्च ग्रामवृद्धाः भवतः पितुः मरणदण्डनात् विमोचनं प्रार्थयन्तः अत्र आगताः आसन् यत् तदपि भवत्पितुः सज्जनतां द्योतयति। अतः वाङ्गं कारागारात् मोचयिष्यामि। ह्यूयेनः स्वस्य दुराचारस्य अनुगुणं दैवेन एव दण्डितः अभवत् इति भावयामि'' इति उक्त्वा वाङ्गं बन्धविमुक्तं कृतवान्। वाङ्गं तत्पुत्रं च सत्कृत्य प्रेषितवान् सः।



# 'सूपर् सारस्'

१९७२ तमे वर्षे अमेरिकादेशे कोलोराडो इत्यत्र, राक्षसगोधिकायाः (डिनोसार्) अवशेषाः प्राप्ताः। ८ द्वादशाङ्गुलदीर्घं भुजास्थि, १० द्वादशाङ्गुलदीर्घं पार्श्वभागास्थि च प्राप्तं तदा। एतस्य आधारेण सा च राक्षसगोधिका २६ द्वादशाङ्गुलदीर्घबाहुयुक्ता, ९० द्वादशाङ्गुलोन्नता, १४० टन् भारयुता च आसीत् इति तर्कितम्। एतस्य जन्तोः 'सूपर् सारस्' इति नाम कृतम् अपि।

'ब्लाक् विडो' नामकः कश्चन अरण्यवासी ऊर्णनाभः मानवानां मारणे अपि समर्थेन विषेण युक्तः भवति। 'रेटिल्सर्पः' घोरविषमयः इति प्रसिद्धिः। किन्तु एतस्य ऊर्णनाभस्य विषं तु तस्य सर्पस्य विषस्य अपेक्षया अपि १५ गुणितशक्तिशालि। १९५०-५९ अवधौ अमेरिकादेशे पूर्वोक्तस्य ऊर्णनाभस्य दंशनेन ६३ जनाः प्राणैः वियुक्ताः जाताः इति श्रूयते।

# दीर्घायुः पक्षी

आण्डियन्पर्वतप्रदेशे कोण्डारनामकाः गृध्रजातीयाः पक्षिणः निवसन्ति। एते सुदीर्घकालं यावत् जीवन्ति। मास्कोप्राणिसङ्ग्रहालये स्थितः एतज्जातीयः कश्चन पक्षी ७२ वर्षाणि यावत् जीवितः आसीत्।



# घोरविषमयः ऊर्णनाभः

# अहो, विस्मृतं खलु भोः!

आनीतं वा पुस्तकम्?

You have brought the book?

अहो, विस्मृतं खलु भोः! स्वीकृत्य प्रस्थातव्यम् इति चिन्तयित्वा उत्पीठिकायाः उपरि स्थापितम्। किन्तु प्रस्थानसमये विस्मृतम् एव।

Oh, no! I forgot. I kept it on the table to be picked up while leaving, but I am sorry I forgot.

किं भोः, सर्वदा एवम् एव करोति भवान्! पुस्तकं न ददामि इति उक्ते अपि बलात् नयति। प्रत्यर्पणे तु सदा विलम्बः एव।

Why do you do like this every time? I said I wouldn't give you the book, but you took it by force and now you are taking your own time to return it.

गतसप्ताहे मया समये एव पुस्तकं प्रत्यर्पितं खलु?

I returned the book in time last week, didn't I?

किं प्रत्यर्पितम्? अहं भवतः गृहम् आगतवान् आसम्। पठनं समाप्तं वा इति मया पृष्टम्। तदा 'आम्' इति वदन् पुस्तकं मम हस्ते अर्पितवान् भवान्। अन्यथा ....।

How could you say you returned it? I had been to your house and asked if you had finished reading. You said 'yes' and gave back the book, otherwise.....!

आं भोः, विस्मरणशीलतायाः किम् औषधम् इत्येव न जानामि। भवादृशैः पुनः पुनः भर्त्स्यमानस्यापि मम विस्मरणशीलता तु न अपगच्छति। तदस्तु, भवदीयं पुस्तकं श्वः अवश्यं प्रत्यर्पयिष्यामि। कृपया क्षाम्यतु माम्।

Yes, but I don't know what is the remedy for forgetfulness. Even after repeated rebukes from people like you, I have not been able to get over the problem. It's all right. I will surely return your book tomorrow. Please excuse me.

तथा किमपि मास्तु। अद्य सायं मया सुरेशस्य गृहं गन्तव्यम्। गमनसमये भवतः गृहम् आगत्य अहम् एव नेष्यामि।

You don't have to take the trouble. I will be going to Suresh's house this evening. I will go via your house and collect the book myself.

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां मे-९१ मासे प्रकटयिष्यामः।





* उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मार्च्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

**'जनवरी'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—**

प्रथमचित्रम् - **"विस्मियते कष्टम् इष्टदर्शनात्।"**

द्वितीयचित्रम् - **"विस्मृतो लोकः कलाराधनात्।"**

प्रेषिका - नीलम शुक्ला, केन्द्रीयविद्यालयः, हल्द्वानी (उ.प्र.)

# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अकिञ्चनः - Utterly poor
अण्वस्त्रम् - Atom bomb
अधमर्णः - A person in debt
अमूर्तः - Formless
अयस्किट्टः - Rust of iron
अर्धोरुकम् - Half-pant
अविहाय - Including
अशरीरवाणी - Celestial voice
उत्तमर्णः - Creditor
उपत्यका - Land at the foot of a hill
उरः - Chest
ऊर्णनाभः - Spider
कणिशम् - Ear of corn
कूर्मः - Tortoise
क्षुतम् - Sneeze
क्षौति - Sneezes
गिलति - Swallows
गृध्रः - Eagle

तालः - Lock
दंशनम् - Biting
निर्गतिकः - Destitute
निर्दुष्टम् - Faultlessly
निष्कृष्टम् - Exactly
प्रतीकम् - Replica
भर्त्सयति - Abuses
महापूरः - Heavy flood
महिषी - Buffalo
मार्दवम् - Softness
मूर्धा - Crown of the head
युतकम् - Shirt
रोद्धुम् - To obstruct
विकलाङ्गः - Handicapped
विवाहघटकः - Match-maker
वेणुः - Flute
वैमनस्यम् - Disgust
हेषारवः - Neighing of a horse

* * *

# Ta dum, They is here

**Oops!**
**Kiddy grammar sure is catchy—Ya, they are here.**

Bow Wow 'n' Floppy the doggies (wuff! wuff!), Jumbo the elephant, Wobbit the rabbit, Teddy 'n' Sporty your bear buddies, the mouse of your house—Squeeks, not to mention Flipper the dolphin 'n' Bunny with the Twins. They are all part of the CUDDLES family. And hang on—there's more to come.



What stuffing to use, what shape to give, which colour to use...... We've spent long months in designing and crafting the toys which can take on the toughest torture test ever—childhandling. To ensure that they're safe.

The one thing we didn't do while making our toys was fool around. We left that entirely for your kid to do. Come, check us out.

**CUDDLES**

CHANDAMAMA TOYTRONIX
In collaboration with Sammo Corporation, S.Korea

Chandamama Buildings, 188, NSK Salai, Vadapalani, Madras-600 026.